TRIVANDRUM SANSKRIT SERIES.

NO. XXXIV.

श्रीराजचूडामणिमखिप्रणीतः

# मणिदर्पणः ।

(शब्दपरिच्छेदः)

THE

# MAṆIDARPAṆA

(Sabdaparichchheda)

OF

RÁJACHÛḌÁMAṆIMAKHIN

EDITED

BY

T. GAṆAPATI SÂSTRÎ

Curator of the Department for the publication of Sanskrit manuscripts,

TRIVANDRUM.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

TRIVANDRUM SANSKRIT SERIES.

NO. XXXIV.

# THE MAṆIDARPAṆA

## (Sabdaparichchheda)

OF

## RÂJACHÛḌÂMAṆIMAKHIN

EDITED

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

**TRIVANDRUM:**

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३४.

---

# मणिदर्पणः

(शब्दपरिच्छेदः)

श्रीराजचूडामणिमखिकृतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१३.

# PREFACE.

Tattvachintâmani popularly known among the Naiyâyikas as Mani is a work on logic which is highly developed by the successive commentaries of Raghunâthabhattâchârya, Gadâdharabhattâchârya and others. The work Manidarpana, the Sabdakhanda (शब्दखण्ड) of which is now published, is a paraphrase of the Mani, just as Kâvyadarpana is of the Kâvyaprakâsa of Mammata. From the colophon (quoted *infra*) of Kâvyadarpana, we learn that there are two more Khandas (खण्ड) of the Manidarpana, which have not come to our hands.

The edition of the work is based on two palm-leaf manuscripts; one of which, marked क. in Malayalam character was kindly lent to us by the Raja of Panthalam. The other manuscript, ख. in Tamil grantha character, more correct but a little wanting at the end was obtained through Mr. Sakti Sastrial of Ayikudi.

The author of the work is the famous Râjachûdamani Dîkshita. He has written a commentary, called Tantrasikhâmani, on Jaimini's Pûrvamîmâmsâ Sûtras. Of this commentary, we have in our possession the 7th, 8th and 9th chapters. In the beginning of the 7th chapter, the author states the date of the composition of the commentary

"धीमन्मान्ये शकस्याब्दे हायने चेश्वराभिधे ।
चूडामणिः कलयते यज्वा तन्त्रशिखामणिम् ॥"

to be Saka year 1559 corresponding to 1636 A. D. That the author composed a Kâvya called Rukminî Kalyâna, when Raghunâtha Bhûpa was reigning in Tanjore is evident from the following verse in the Kâvya itself.

"अध्यास्य तञ्जानगरीममुष्मिन् (रघुनाथे) सर्वंसहां शासति सार्वभौमे ।
श्रीराजचूडामणियायजूकश्चित्रं निबध्नाति हरेश्चरित्रम् ॥"

A list of works of Râjachûdâmani Dîkshita is given in the following verses from his Kâvyadarpana:—

"अधीत्य निखिलं शास्त्रमग्रजाद्दीक्षितेष्टिनः ।
विदुषां प्रीतये येन व्याकृता **शास्त्रदीपिका** ॥
यत्नं विनैव विहितो येन **तन्त्रशिखामणिः** ।
नव्या सङ्कर्षकाण्डस्य **न्यायमुक्तावली** तथा ॥
व्याकृता याजुषी शाखा तथोपनिषदोऽखिलाः ।
प्रणीता चाग्निहोत्रादेः **प्रायश्चित्तप्रदीपिका** ॥
**न्यायचूडामणि**र्नाम्ना न्यायजालोपबृंहिता ।
**रुचिदत्तस्य** च व्याख्या रुचिरा येन निर्मिता ॥
**मणिदर्पण**नामानं (?) महितं वाङ्मुखं मणेः ।
खण्डत्रयस्य दुर्वादिखण्डनाय व्यधत्त यः ॥
येन **शृङ्गारसर्वस्व**नामा भाणोऽप्यभण्यत ।
यश्चैकाह्ना भोजचम्पोर्युद्धकाण्डमपूरयत् ॥
येन **भारतचम्पुश्च वृत्ततारावली** तथा ।
विहिते **शङ्कराचार्यतारावल्याः** सहोदरे ॥
सर्वतन्त्रस्वतन्त्रस्य श्रीनिवासमखीशितुः ।
कर्तुर्विश्वजितो येन तातस्य यमिता कथा ॥
**रघुवीरस्य कृष्णस्य** पाण्डवानां च यः कथाः ।
प्रत्यक्षरश्लेषमयैः पद्यैर्हृद्यैरवर्णयत् ॥
यमिता मञ्जुभाषिण्या येन सीतापतेः कथा ।
**शङ्कराभ्युदया**भिख्यं काव्यं येनैव निर्मितम् ॥
काव्यं **कंसवधं रुक्मिण्युद्वाह**मपि यो व्यधात् ।
येनोदिता **कमलिनीकलहंसा**ख्यनाटिका ॥
**आनन्दराघवं** नाम नाटकं च प्रपञ्चितम् ।
येन व्यतान्य**लङ्कारचूडामण्य**भिधा कृतिः ॥
**अथ** वृत्तिविवेकेन विचित्रा **चित्रमञ्जरी** ।
तेन व्यतानि **श्रीराजचूडामणिमखीन्दुना** ॥
**काव्यदर्पण**नामासौ प्रबन्धो विदुषां मुदे । "

Trivandrum, T. GAṆAPATI SĀSTRĪ.

# निवेदना

मणिर्मणिरिति नामैकदेशग्रहणेन व्यवहृतो यस्तत्त्वचिन्तामणिर्नाम श्रीरघु-**नाथ-गदाधर**भट्टाचार्यादीनां व्याख्यानपरम्परया दूरप्रपञ्चितार्थो न्यायग्रन्थः, तस्योपन्यासरूप एष **मणिदर्पणः**, **काव्यदर्पण** इव **काव्यप्रकाश**स्य । अस्य शब्दखण्डोऽयमिदानीं प्रकाश्यते । **मणिदर्पण**स्य खण्डद्वयमन्यदप्यस्तीत्युदाहरिष्य-माण**काव्यदर्पण**वचनतोऽवगतम् । तत्त्वस्माभिर्नोपलब्धम् ।

शब्दखण्डस्यास्य संशोधनाधारभूतौ द्वावादर्शौ तालपत्रात्मकौ । तयोरेकः **पन्तलराज**सकाशादासादितः केरलीयलिपिः प्रायः शुद्धः क.संज्ञः । द्वितीयः (आ-यक्कुटि) **शक्ति**शास्त्रिभ्योऽधिगतो द्रमिलग्रन्थलिपिः ख.संज्ञः पूर्वस्माच्छुद्धतरः किञ्चिन्न्यूनः ।

**मणिदर्पण**स्य प्रणेता श्री**राजचूडामणि**दीक्षितः । एतत्प्रणीतस्य **तन्त्र-शिखामणे**र्नाम द्वादशलक्षणीविवरणस्य सप्तमादिनवमान्ताध्यायात्मको भागोऽस्मा-भिरुपलब्धः । अस्यारम्भे —

"धीमन्मान्ये शकस्याब्दे हायने चेश्वराभिधे ।
**चूडामणिः** कलयत यज्वा **तन्त्रशिखामणिम्** ॥"

इति वदन् **राजचूडामणि**दीक्षितः १५५८तमे शकाब्दे १६३६तमक्रैस्ता-ब्दतुल्ये स्वस्य स्थितिं स्पष्टमेवोक्तवान् । एष **तञ्जा**पुरमधिष्ठाय **रघुनाथ**भूपे† मही शासति **रुक्मिणीकल्याणं** नाम काव्यं निबबन्धेति तस्य प्रथमसर्गे प्रतिपादि-तम् । यथा —

"अध्यास्य **तञ्जान**गरीममुष्मिन्† सर्वंसहां शासति सार्वभौमे ।
श्री**राजचूडामणि**यायजूकश्चित्रं निबध्नाति हरेश्चरित्रम् ॥"

इति ।

"अधीत्य निखिलं शास्त्रमग्रजाद**दीश्वरेष्टिनः** ।
विदुषां प्रीतये येन व्याकृता **शास्त्रदीपिका** ॥
यत्नं विनैव विहितो येन **तन्त्रशिखामणिः** ।
नव्या सङ्कर्षकाण्डस्य **न्यायमुक्तावली** तथा ॥

---

† रघुनाथे

व्याकृता याजुषी शाखा तथोपनिषदोऽखिलाः ।
प्रणीता चाग्निहोत्रादेः **प्रायश्चित्तप्रदीपिका** ॥
**न्यायचूडामणि**र्नाम्ना न्यायजालोपबृंहिता ।
**रुचिदत्त**स्य च व्याख्या रुचिरा येन निर्मिता ॥
**मणिदर्पण**नामानं (?) महितं वाङ्मुखं मणेः ।
खण्डत्रयस्य दुर्वादिखण्डनाय व्यधत्त यः ॥
येन **शृङ्गारसर्वस्व**नामा भाणोऽप्यभण्यत ।
यश्चैकाह्ना भोजचम्पोर्**युद्धकाण्ड**मपूरयत् ॥
येन **भारतचम्पुश्च वृत्ततारावली** तथा ।
विहिते **शङ्कराचार्यतारावल्याः** सहोदरे ॥
सर्वतन्त्रस्वतन्त्रस्य **श्रीनिवास**मखीशितुः ।
कर्तुर्विश्वजितो येन तातस्य यमिता कथा ॥
रघुवीरस्य कृष्णस्य पाण्डवानां च यः कथाः ।
प्रत्यक्षरश्लेषमयैः पद्यैर्हृद्यैरवर्णयत् ॥
यमिता मञ्जुभाषिण्या येन सीतापतेः कथा ।
**शङ्कराभ्युदया**भिख्यं काव्यं येनैव निर्मितम् ॥
काव्यं **कंसवधं रुक्मिण्युद्वाह**मपि यो व्यधात् ।
येनोदिता **कमलिनीकलहंसा**ख्यनाटिका ॥
**आनन्दराघवं** नाम नाटकं च प्रपञ्चितम् ।
येन व्यतान्य**लङ्कारचूडामण्य**भिधा कृतिः ॥
अथ वृत्तिविवेकेन विचित्रा **चित्रमञ्जरी** ।
तेन व्यतानि **श्रीराजचूडामणि**मखीन्दुना ॥
**काव्यदर्पण**नामासौ प्रबन्धो विदुषां मुदे ।"

इत्येतेभ्यः **काव्यदर्पण**स्यान्तिमश्लोकेभ्यो बहवो ग्रन्थाः **शास्त्रदीपिकाव्याख्या**-प्रभृतयः श्री**राजचूडामणि**दीक्षितेन विरचिता विज्ञायन्ते ।

**अनन्तशयनम्.** **त. गणपतिशास्त्री.**

॥ श्रीः ॥

राजचूडामणिमखिकृतं

# मणिदर्पणम् ।

---

## शब्दपरिच्छेदः ।

### सङ्गतिवादः ।

अश्रान्तमुत्पुलकजालमजस्रमाविस्स्वेदाम्बुबिन्दु सततार्धनिमीलिताक्षम् ।
नित्यं दरोच्छ्वसितनीवि सदा सकम्पं श्यामारुणं भवतु धाम शिवङ्करं नः ॥

अधीत्य निखिलं शास्त्रमग्रजादीश्वरेष्टिनः ।
राजचूडामणिमखी कुरुते मणिदर्पणम् ॥

अथ शक्तिग्राहकतयोपमानस्य शब्दोपजीव्यत्वादुपमाननिरूपणानन्तरं शब्दो निरूप्यते । यद्यप्यतिदेशवाक्यरूपशब्दस्याप्युपमानोपजीव्यत्वं, तथापि मानविभाजकोपाध्यवच्छेदेनोपजीव्यत्वस्यात्र प्रथमनिरूपणे तन्त्रत्वेन विवक्षितत्वात् । न चैवमनुमानत्वावच्छिन्नस्य स्वानुव्यवसायरूपप्रत्यक्षं प्रत्युपजीव्यत्वादनुमाननिरूपणस्य प्रत्यक्षनिरूपणात् प्राथम्यं स्यादिति वाच्यम् । तथाप्यनुमानत्वावच्छिन्नस्य साक्षात् परम्परया वा प्रत्यक्षोपजीवकत्वमप्यस्तीति विनिगमनाविरहे सति बहुवादिसम्मतत्वात् प्रत्यक्षस्य प्रथमनिरूपणम् । नन्वेवमुपमानत्वावच्छिन्नस्योपजीव्यत्वेऽपि तदवच्छिन्नस्यातिदेशवाक्यरूपशब्दोपजीव-

कत्वमप्यस्तीति विनिगमनाविरहे सति बहुवादिसम्मतत्वाच्छब्दस्यैव प्रथमनिरूपणं स्यादिति चेद्, न। कीदृग् गवय इति प्रश्ने चित्रलेख्यादिना गवयसदृशगोपिण्डदर्शनं यत्र, तत्र शब्दं विनापि गोसदृशो गवय इति चित्रकाराभिप्रायमनुमायोपमानप्रवृत्त्युपपत्तेरुपमानत्वावच्छिन्नस्य शब्दोपजीवकत्वाभावात्। न च 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायात् तत्राप्याभिप्रायिक[1]शब्दकल्पनमेव युक्तमिति वाच्यम्। एतावता शाब्दानुभवविषयपदार्थानां शब्दोपस्थाप्यत्वनियमेऽपि प्रश्नविषयस्य पदार्थस्य शब्दादेवोपस्थितिरिति नियमासिद्धेः। अत एव वह्निप्रश्ने धूमोऽस्तीति वाक्यस्यानुमानिकवह्निपरस्य प्रयोगः। तस्माच्छब्दस्य बहुवादिसम्मतत्वेऽप्युपमानस्य मानविभाजकोपाध्यवच्छेदेन शब्दोपजीव्यत्वात् तन्निरूपणस्य शब्दनिरूपणात् प्राथम्यमिति दिक्॥

इति सङ्गतिवादः।

---

## अथ शब्दस्वातन्त्र्यवादः।

तत्र 'प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणमि' ति मणिकृतः। अत्र पदार्थतत्त्वज्ञानजन्ये वह्निना सिञ्चेदित्ययोग्यवाक्येऽतिव्याप्तिवारणाय प्रयोगहेतुभूतेति। वाक्यार्थतत्त्वज्ञानस्यैव प्रयोगरूपवाक्यहेतुत्वाद् वाक्यार्थतत्त्वज्ञानजन्यत्वलाभान्नायोग्येऽतिव्याप्तिः। तत्र वाक्यार्थज्ञानस्य तत्त्वज्ञानत्वा-

१. 'यश' ख. पाठः.

भावात् । न चैवमपि पारमेश्वरवाक्यान्तरार्थविषयकतत्त्वज्ञाने-नायोग्यवाक्यजननादतिव्याप्तितादवस्थ्यमिति वाच्यम्। मीमांसकमतसाधारण्याय भगवदनङ्गीकारेणैव तल्लक्षणप्रणयनात् । न चैवं शुकादिसंवादिवाक्याव्याप्तिरिति वाच्यम् । निरुक्तशब्दजातीयत्वस्य विवक्षितत्वात्। साजात्यं च योग्यशब्दत्वेनेत्यदोषात् । न चैवं लक्षणशरीरप्रविष्टस्य योग्यशब्दत्वस्यैव लक्षणत्वसम्भवे किं पूर्वप्रतीकेनेति[1] वाच्यम् । घटः कर्मत्वमानयनं कृतिरिति निराकाङ्क्षेऽतिव्याप्तिवारणाय स्वप्रतिपाद्यवाक्यार्थतत्त्वज्ञानजन्यत्वविशेषणस्यावश्यकत्वात् । निराकाङ्क्षे च स्वप्रतिपाद्यवाक्यार्थाभावान्नातिव्याप्तिः। न च तस्यापि पुरुषविशेषं प्रति बोधकतया न तन्निराससम्भव इति वाच्यम् । तादृशस्य सङ्ग्राह्यत्वात् । न चैवमपि शुकादिवाक्यानुरोधेन पदावलिज्ञानमेव वाक्ये हेतुर्न वाक्यार्थज्ञानमित्युत्पत्तिप्रामाण्यवादे[2] व्यवस्थापितत्वात् तज्जन्यत्वगर्भमिदं लक्षणमसम्भवीति वाच्यम् । सम्प्रदायमतेनैतल्लक्षणप्रणयनादिति दिक् ।

भगवदङ्गीकारपक्षे तु तज्जातीयत्वं न विवक्षणीयम् । न च तथा सति शुकादिसंवादिवाक्येऽव्याप्तिरित्युक्तमिति वाच्यम् । तस्यापि स्वप्रतिपाद्यवाक्यार्थविषयकभगवत्तत्त्वज्ञानजन्यतयाव्याप्त्यभावात् । निराकाङ्क्षे च स्वप्रतिपाद्यवाक्यार्थाभावादेव नातिव्याप्तिः। पुरुषविशेषं प्रति बोधकस्य तु तस्य सङ्ग्राह्यत्वमेवे-

१. 'तीतिके' क. पाठः. २. 'ण्ये व्य' ख. पाठः.

त्युक्तम् । यदि च तस्य प्रमाणत्वेनाव्यवह्रियमाणत्वान्न सङ्ग्राह्य-
तेति मतं, तदा व्याकरणाद्यभियुक्तैः प्रमाणत्वेन व्यवह्रियमा-
णपरेण शब्दपदेन तन्निरासः । न चैवं शब्दपदस्य लक्षणप्रवेशे
प्रमाणमात्रं लक्ष्यं स्यादिति प्रत्यक्षादावव्याप्तिरिति वाच्यम् । का-
काक्षिन्यायेन लक्ष्येऽपि शब्दपदान्वयात् । नन्वेवमपि मौनिश्लो-
काव्याप्तिः, तस्यानुच्चारितत्वेन तादृशतत्त्वज्ञानाजन्यत्वादिति
चेद्, न । मौनिश्लोकस्य यदि वाक्यत्वं, तदा वाक्यार्थज्ञानज-
न्यत्वमक्षतं, वाक्यत्वस्यैव लाघवात् तज्जन्यतावच्छेदकत्वेन
तदुच्चारितत्वस्य गौरवेण तदनवच्छेदकत्वात् । वाक्यत्वाभावे
चालक्ष्यत्वेनाव्याप्त्यभावात् । केचित्तु—मौनिश्लोकस्यानुच्चारित-
त्वेऽपि तद्घटकपदानां भिन्नभिन्नश्लोकान्तरघटकतया कदाचि-
दुच्चारणात्, तेषां च मौनिवाक्यार्थज्ञानाजन्यत्वेऽपि भगवत्स्वा-
र्थतत्त्वज्ञानजन्यत्वान्नाव्याप्तिरित्याहुः । नन्वेवं स्वपदान्तर्भावे ल-
क्षणमिदमितरभेदसाधकं न स्याद्, अयोग्यवाक्ये स्वप्रतिपाद्य-
वाक्यार्थतत्त्वज्ञानजन्यत्वाप्रसिद्ध्या तद्ग्रहासम्भवेन तत्र व्यतिरे-
कव्याप्तिग्रहासम्भवादिति चेद्, न । स्वप्रतिपाद्यवाक्यार्थतत्त्व-
ज्ञानजन्यत्वस्य योग्यवाक्ये प्रसिद्धस्याभावोऽयोग्यवाक्ये सङ्गृ-
ह्यत इति न व्याप्तिग्रहासम्भव इत्येके । न व्यावृत्त्यर्थमिदं ल-
क्षणं, किन्तु व्यवहारार्थमित्यप्याहुः । न चैवमपि स्वपदान्तर्भा-
वे लक्षणमिदमननुगतं स्यादिति वाच्यम् । इदं वाक्यमत्र प्रमा-
णम्, इदं वाक्यमत्रेत्यननुगतस्यैव लक्ष्यत्वेन लक्ष्यस्याप्यननु-

१. 'णत्वप' क. पाठः. २. 'व्याप्तिग्रह' ख. पाठः.

गततया लक्षणाननुगमस्यादोषत्वादिति दिक् ।

अत्र सौगताः—शब्दो न प्रमाणं, तस्मिन् सत्यपि प्रमानियमाभावाद्, अयोगव्यवच्छेदेन प्रमासम्बन्धिन एव प्रमाणत्वादित्याहुः । तन्न। चक्षुषि सत्यपि कदाचित् प्रमाया अजननात् तस्यापि प्रमाणत्वं न स्यात् । सन्निकर्षादिसमवधाने ततः प्रमानियम इति यदि, तदाकाङ्क्षादिसमवधाने शब्दादपि प्रमानियमाच्छब्दस्यापि प्रामाण्यमक्षतमिति दिक् ।

वैशेषिकास्तु—आकाङ्क्षादिसहकारिसमवहितः शब्दगोचरः प्रत्ययः प्रमाजनक इति सत्यम् । परं त्वनुमानविधया, न स्वातन्त्र्येण, क्लृप्तप्रमाणद्वयातिरिक्तप्रमाणकल्पने मानाभावात् । न च 'वाक्यश्रवणानन्तरभाविनी संसर्गप्रमा सकरणिका, प्रमात्वादि'त्यनुमानमेव मानमिति वाच्यम् । इयं ह्यनुमितिः संसर्गप्रमाकरणं विषयीकुर्वती क्लृप्तप्रमाणभावं लिङ्गज्ञानमेव तादृशप्रमाकरणत्वेन विषयीकरोति, न त्वाकाङ्क्षादिमत्पदकदम्ब[1]कज्ञानं, गौरवात् । तत्र संसर्गप्र[2]मोपकमनुमानं चेत्थं—गामानय दण्डेनेत्यादिपदानि तात्पर्यविषयस्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वाद्, घटमानयेति वाक्यवदिति । अत्र ब्राह्मणे विद्येत्यादौ सम्भवनियमादिरूपस्य संसर्गद्वयस्य सम्भवादनभिमतसंस[3]र्गबोधवारणाय तात्पर्यविषयेति संसर्गविशेषणम् । अत्र यावत्त्वमपि संसर्गे विशेषणं देयम् । तेन यत्र

१. 'म्बज्ञा' क. पाठः. २. 'मानुमाप' ख. पाठः. ३. 'र्गस्यार्थान्तरवा' क. पाठः.

नानार्थस्थले युगपदुभयतात्पर्यग्रहः, तत्रान्यतरसंसर्गसिद्ध्यापि साध्यपर्यवसानात् संसर्गान्तरसिद्धये शब्दप्रामाण्यमभ्युपेयमित्यपास्तम्। इदं च तात्पर्यविषयत्वं पदार्थेऽपि विशेषणम्। तेन सैन्धवमानयेत्यत्र सैन्धवपदार्थसंसर्गमात्रस्य तात्पर्यविषयतया लवणसंसर्गपरे नाश्वादिसंसर्गसिद्धिप्रसङ्गः। धूमेनायं वह्निमनुमिनोतीति तात्पर्येण प्रयुक्तं साक्षाद् धूमतात्पर्यकं परम्परया वह्नितात्पर्यकं च धूमोऽस्तीति वाक्यं पक्षीकृत्य प्रकृतसाध्यसाधने परम्परया तात्पर्यविषयवह्निसंसर्गज्ञानपूर्वकत्वसिद्ध्यापि साध्यपर्यवसानाद् धूमसंसर्गसिद्धये शब्दप्रामाण्यं पृथगुपेयं स्यादित्यत उक्तं स्मारितार्थेति[1]। इदं (त्वि ? तु) पदं वृत्त्या प्रकृतपदस्मारितार्थपरम्। तेन वह्नेरपि परम्परया प्रकृतपदस्मारितत्वेऽपि न वृत्त्या प्रकृतपदस्मारितत्वमिति न तत्संसर्गज्ञानपूर्वकत्वसिद्ध्या साध्ये[2]पर्यवसानम्। न च यावत्त्वस्यापि संसर्गविशेषणतया स्मारितपदाभावेऽपि न वह्निसंसर्गज्ञानपूर्वकत्वमात्रेण साध्यै[3]पर्यवसानं, येन स्मारितपदमावश्यकं स्यादिति वाच्यम्। तथापि धूमोऽस्तीति वाक्यपक्षकों[4]दनुमानादेव धूमसंसर्गवद् वह्निसंसर्गस्यापि वक्तुरनभि[5]मतस्य[6] सिद्धिर्मा भूदित्येवमर्थं वृत्त्या प्रकृतपदस्मारितत्वपरस्य स्मारितपदस्यावश्यकत्वात्। अत एव शब्दस्य पृथक् प्रामाण्याभावे शक्तिग्रहापेक्षा न स्यादित्यपास्तम्। वृत्त्या प्रकृतपदस्मारितत्वसिद्धये तदपेक्षणात्। ज्ञानपदं च प्रमापरम्। तेन

---

१. 'तपदार्थेति। प' ख. पाठः. २. 'ध्या' क. पाठः. ३. 'ध्या' क. पाठः. ४. 'कानु' ख. पाठः. ५. 'राभि' क.पाठः. ६. स्यापि सि' क. पाठः.

तादृशभ्रमपूर्वकत्वसिद्ध्या नार्थान्तरम् । अत एव निष्कम्पप्रवृत्तिजनकमेव ज्ञानमिहोद्देश्यं, न तु संसर्गज्ञानमात्रम् । तादृशं च ज्ञानं स्वविषयसंसर्गविषयकसंशयनिवर्तकमेव भवति । तादृशं[1] च ज्ञानं संशयसाधारणज्ञानपूर्वकत्वमात्रसिद्ध्या[3] न सम्भवति, असत्यपि संसर्गे तज्ज्ञानपूर्वकत्वसम्भवेन प्रकृतानुमितेः स्वविषयसंसर्गविषयकसंशये[4]निवर्तकत्वो[5]भावात् । तस्मात् प्रवर्तकीभूतार्थसंशयनिवर्तकज्ञानसिद्ध्यर्थं शब्दप्रामाण्यमभ्युपेयमित्यपास्तम् । संसर्गप्रमापूर्वकत्वसिद्धौ प्रमाया अर्थसत्तानियतत्वेन प्रकृतानुमितेः संसर्गविषयकसंशयनिवर्तकत्वसम्भवादिति दिक् ।

हेतौ चाकाङ्क्षादिमदित्यादिपदेन योग्यतासत्त्योः सङ्ग्रहः । तत्र अहो विमलं जलं नद्याः कच्छे महिषश्चरतीति वाक्ये नदीजलसंसर्गपरे नद्याः कच्छ इत्यंशे व्यभिचारः । तत्र योग्यतासत्तिमत्त्वहेतोः सत्त्वात् । नदीकच्छसंसर्गस्य च वक्तृतात्पर्याविषयत्वेन तात्पर्यघटितसाध्याभावात् । अत उक्तमाकाङ्क्षेति । यद्यपि यत्पदस्य यत्पदव्यतिरेकप्रयुक्तं तदर्थान्वितस्वार्थान्वयाननुभावकत्वं, तत् तेन साकाङ्क्षमित्युक्तलक्षणाकाङ्क्षा तत्रा[6]स्ति, तथापि यत्पदस्य य[7]त्पदव्यतिरेकप्रयुक्तं तात्पर्यविषयान्वयाननुभावकत्वमिति तात्पर्यघटिताकाङ्क्षैव हेतुघटकत्वेन विव-

१. 'च' ख. पाठः. २. 'शङ्का' क. पाठः. ३. 'त्रप्रसि' क. पाठः. ४. 'या' ख. पाठः. ५. 'त्वात्' । ख. पाठः. ६. 'त्राप्यस्ति' ख. पाठः. ७. 'यद्याति' क. पाठः.

क्षिता । तत्र[1] नदीपदस्य तात्पर्यविषयजलान्वयाननुभावकत्वं न कच्छपदव्यतिरेकप्रयुक्तं, किन्तु जलपदव्यतिरेकप्रयुक्तमिति विवक्षिताकाङ्क्षाविरहाद् भवति तेन तद्व्युदासः। योग्यतापदं चाकाङ्क्षासत्तिमत्ययोग्यवाक्ये प्रमाग[2]र्भसाध्याभावेन व्यभिचारवारणार्थम् । आसत्तिपदं चाजनितपदार्थस्मरणके योग्यसाकाङ्क्षे स्मारितत्वरूपविशेषणाभावेन विशिष्टसाध्याभाववति वाक्ये व्यभिचारवारणाय। तत्र यद्यप्यव्यवहितपदार्थस्मृतिरासत्तिः, तथाप्यव्यवधानांशो न हेतुशरीरप्रविष्टः, पदार्थस्मृतिमात्रेणैवाजनितपदार्थस्मरणके वाक्ये व्यभिचारवारणात्। कदम्बग्रहणं चाकाङ्क्षायाः परस्परपदार्थनिरूपितत्वप्रतिपादनार्थम्। एवञ्च,अहो विमलं जलमिति वाक्ये जलनदीसंसर्गपरे नद्याः कच्छ इत्यंशे व्यभिचारः, न च तत्र तात्पर्यघटिताकाङ्क्षाभावेन हेतोरेवागमनान्न व्यभिचार इति वाच्यं, नदीपदस्य जलेन कच्छपदस्य महिषेण च तात्पर्यघटिंताकाङ्क्षाया अपि सत्त्वेन हेतोस्तत्राप्रत्यूहत्वात् प्रकृतपदस्मारितपदार्थसंसर्गस्य तात्पर्याविषयत्वेन तात्पर्यघटितसाध्याभावादिति निरस्तम् । तत्र परस्परपदार्थनिरूपिततात्पर्यघटिताकाङ्क्षाविरहात् । एवं यदर्थे योग्यता, तदर्थविषयकासत्ति[3]मत्त्वद्योतनार्थं च कदम्बग्रहणम् । तेन यस्य नीलघटत्वावच्छेदेन घटपदशक्तिभ्रमः, तस्य जनितनीलघटस्मरणके पीतघटवत्तया च योग्ये पीतघटतात्पर्यके च घटोऽस्तीति वाक्ये व्यभिचारः । तत्र[4] स्मारितार्थसंसर्गस्य तात्पर्यविषयत्वाभावेन सा-

---

१. 'तश्च न' ख. पाठः. २. 'म्य' क. पाठः. ३. 'त्तिद्यो' क. पाठः. ४. 'तः' क. पाठः.

[1]ध्यस्यासत्त्वादिति निरस्तम् । (तत्र ?) यत्र पीतघटे योग्यता, तत्रासत्तेरभावेन [2]हेतोरेवागमनात् । एवं यदंशे तात्पर्यघटिताकाङ्क्षा, तदंश एवासत्तिमत्त्वद्योतनार्थं च कदम्बग्रहणम् । तेन नानार्थस्थलेऽर्थान्तरतात्पर्यके योग्यताविशिष्टार्थान्तरस्मृतिजनके व्यभिचारः, तत्र स्मारितपदार्थसंसर्गस्य तात्पर्यविषयत्वाभावेनोक्तसाध्याभावादिति निरस्तम् । यदंशे तात्पर्यगर्भाकाङ्क्षा, तदंश आसत्तेरभावेन विवक्षितहेतोरेवाभावादिति दिक् ।

नन्वेवमप्यनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन[3] तादृशसंसर्गप्रमापूर्वकत्वत्वप्रकारकत्वमेव सिध्यति, न (च ?तु) रजतत्वादिप्रकारकत्वम् । प्रवर्तकं च ज्ञानं रजतत्वादीष्टतावच्छेदकप्रकारकमेव ज्ञानमिति तादृशज्ञानसिद्धये शब्दप्रामाण्यमावश्यकमिति चेद्, न । तथापि 'रजतानयनादिपदार्थास्तात्पर्यविषयमिथःसंसर्गवन्तः, आकाङ्क्षादिमत्पदस्मारितत्वादि'ति पदार्थपक्षकानुमाने रजतत्वादेः पक्षतावच्छेदकतया रजतत्वादिप्रकारकानुमितेरपि सम्भवात् । न च यत्र विमलं जलमित्यश्रुत्वैव नद्याः कच्छ इति शृणोति, तत्राकाङ्क्षादिमत्पदस्मारितत्वहेतोस्तात्पर्यगर्भसाध्यव्यभिचारेण नानुमितिसम्भव इति वाच्यम् । तथापि 'जलपदार्थोऽपरपदार्थसंसर्गवान्, तदाकाङ्क्षादिमत्पदस्मारितत्वादि'त्यनुमितौ बाधकाभावात् ।

नन्वेवं, देवदत्तो गच्छतीत्यत्र गच्छतिपदार्थौ गमनानुकू-

---

१. 'ध्यास' ख. पाठः. २. 'न तत्र हे' क. पाठः. ३. 'न संसर्गज्ञानपूर्वकत्वप्रकारकज्ञानासिद्धावपि न प्रवृत्तिजनकप्रवृत्तिविषयाविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानसिद्धिरिति प्रवृत्तिजनकतादृशज्ञा' क. पाठः. ४. 'वान्न शब्दप्रामाण्यम् । न' ख. पाठः.

त्पयत्नो देवदत्तविशेषणतया, तत्संसर्गश्च संसर्गमर्यादया भासत इत्यनुभवसिद्धम्। तच्च नानुमानविधया जनकत्वे सम्भवति। अनुमितौ संसर्गस्य व्यापकतया प्रकारत्वेन भाननियमादिति चेद्, एवम'प्ययं पदार्थ इतरपदार्थवानि'ति तादृशसंसर्गप्रतीतिसम्भवात्। न चैवमपि यत्राकाङ्क्षादिमत्पदज्ञानं जातं, न तु[2] तत्स्मारितत्वज्ञानं, तत्रापि संसर्गानुभवेन तत्रानुमितिसामग्रीविरहाच्छब्द एव प्रमाणमिति वाच्यम्। प्रमाणान्तरकल्पने गौरवेण शब्दस्यानुमानविधयैव बोधकत्वसिद्धौ स्मारितत्वाज्ञाने तादृशसंसर्गानुभवस्यैवासिद्धेः। अस्तु वा तत्रापि तद[3]नुभवः, तथाप्याकाङ्क्षादिमत्पदमेव वाच्यवाचकभावसम्बन्धेनार्थनिष्ठत्वाल्लिङ्गम[4]स्त्विति न शब्दः पृथक् प्रमाणमित्याहुः।

अत्रोच्यते—'अयं पदार्थ इतरपदार्थवान्, आकाङ्क्षादिमत्पदवत्त्वादि'त्यनुमितावनभिमतसंसर्गमादायार्थान्तरवारणाय तात्पर्यविषयीभूतापरपदार्थसंसर्गवानित्येवानुमेयमित्यनुमितौ न संसर्गमर्यादया संसर्गस्य विषयत्वसम्भवः। किञ्च, घटोऽस्तीत्यादौ योग्यतासंशयेऽपि संसर्गानुभवदर्शनेन योग्यताया न लिङ्गविशेषणत्वं युक्तं, पक्षे निश्चितस्यैव लिङ्गस्यानुमितिहेतुत्वात्। अपिच, न केवलाकाङ्क्षादिज्ञानादनुमितिसम्भवः, व्यभिचारात्, किन्तु परस्परापेक्षाकाङ्क्षाज्ञानादित्युक्तं प्राक्। ततश्च घटमानयेत्यादौ केवलाकाङ्क्षादिज्ञानेऽप्यर्थबोधाच्छब्दः प्रमाणम्। किं

---

१. 'त्ते' ख. पाठः. २. 'च' ख. पाठः. ३. 'दनन्तु' ख. पाठः.
४. 'मिति' ख. पाठः. ५. 'यपदा' क. पाठः.

बहुना, देवदत्तः पचतीत्यादौ देवदत्तविशेष्यिकैव प्रतीतिः, देवदत्तेन पच्यते तण्डुल इत्यत्र तण्डुलविशेष्यिकैव प्रतीतिरित्यनुभवसिद्धम्। इदं च शब्दस्वातन्त्र्य एव सिध्यति, नान्यथा। देवदत्तः पचतीत्यत्र 'पचतिपदार्थस्तात्पर्यविषयदेवदत्तपदार्थसंसर्गवानि'त्यनुमितिसम्भवात्। तस्माच्छब्दः पृथक् प्रमाणम्। एतेन पदात् पदार्थोपस्थितौ सत्यां मनसैव संसर्गधीरस्तु, उपनीतभानसामग्रीसत्त्वादित्यपास्तम्। तथासति विशेषणविशेष्यभावनियमानुपपत्तेः। किञ्च, मनसो बहिरस्वातन्त्र्येण तादृशज्ञानजनने किञ्चित् सहकारि कल्प्यम्। तच्च शब्द एव नान्यदिति दिक्।

केचित्तु—अनुमानविधयैव शब्दप्रामाण्ये घटमानयेत्यत्रेव घटः कर्मत्वमित्यत्रापि संसर्गावबोधः स्यात्। विभक्तिविशेषसमभिव्यवहारस्यानुपयोगादित्याहुः।

नन्वेवमपि, शब्दो न पृथक् प्रमाणम्। तथाहि—सैन्धवमानयेति नानार्थस्थले आनयनपदं लवणान्वितस्वार्थपरमिति तात्पर्यग्रहाभावे तात्पर्यविषयलवणान्वयबोधनियमो न स्यात्। अतस्तत्र तात्पर्यज्ञानस्यान्वयबोधहेतुत्वे कल्प्यमाने लाघवाच्छाब्दबोधत्वावच्छेदेनैव हेतुत्वं कल्प्यते, न तु नानार्थशब्दस्थलीयशाब्दबोधत्वावच्छेदेन, गौरवाद्, इति तात्पर्यावच्छेदकतयैव संसर्गस्य तात्पर्यज्ञाने भानान्न शब्दः प्रमाणम्।

---

१. 'नुभवा' क. पाठः. २. 'मा' क. पाठः. ३. 'तसा' क. पाठः. ४. 'नं ल' क. पाठः. ५. 'हणाभा' क. पाठः.

न चानयनपदं लवणान्वितस्वार्थपरमिति सामान्यतस्तात्पर्यग्रहः[1], शब्देन तु लवणानयनसंसर्गधीरिति न तात्पर्यस्यावच्छेदकतया प्रथमं ससर्गधीरिति वाच्यम् । अक्षैर्दीव्यतीत्युभयपदनानार्थस्थले दुरोदरक्रीडनसंसर्गपरमिदं वाक्यमिति विशेषतस्तात्पर्यग्रहोऽवश्यमङ्गीकार्यः । इतरथा दुरोदरैर्भासत इत्यनभिमतसंसर्गप्रतीत्यापत्तेः । ततश्च शाब्दबोधत्वावच्छेदेनैव विशेषतात्पर्यग्रहो हेतुः, लाघवात्, इति न शब्दस्वातन्त्र्यमिति चेद्, न । अक्षैर्दीव्यतीत्यत्राप्यक्षपदं क्रीडनान्वितस्वार्थपरं, दीव्यतिपदं च दुरोदरान्वितस्वार्थपरमित्युभयतात्पर्यग्रहोऽपि विनिगमनाविरहेण हेतुः । दुरोदरक्रीडनसंसर्गस्तु वाक्यार्थ इति न शब्दस्वातन्त्र्यविघातः ।

किञ्च, तात्पर्यावच्छेदकतया संसर्गभानेऽपि[2] न तद्भानं संसर्गग्रहविरोधीति न प्रवृत्तिजननक्षममिति स्वातन्त्र्येण संसर्गभानार्थं शब्दप्रामाण्यमेष्टव्यम् । किं बहुना, तात्पर्यावच्छेदकतया ज्ञातस्यैव संसर्गस्य बोधकत्वेऽपि धारावाहिकप्रत्यक्षकरणस्य चक्षुष इव शब्दस्य प्रामाण्यमविरुद्धमिति दिक् ।

नन्वेवमपि, तात्पर्यावच्छेदकतया संसर्गग्रहे सति कथं शाब्दधीः, सिद्धेः परोक्षज्ञानत्वावच्छेदेन प्रतिबन्धकत्वादिति चेद्, न । प्रत्यक्षतो दर्शनेऽपि भूतले घटो घटवद् भूतलमिति

---

१. 'हः शाब्दबोधहेतुः, न तु लवणानयनसंसर्गपरामिति' क. पाठः. २. 'पि त' क. पाठः.

वाक्यादर्थप्रतीतेरानुभविकत्वेन शाब्दसिद्धेरेव प्रतिबन्धकत्वकल्पनात् । तस्माच्छब्दः पृथक् प्रमाणमिति सङ्क्षेपः ॥

इति शब्दस्वातन्त्र्यवादः ।

## अथाकाङ्क्षावादः ।

स च शब्द आकाङ्क्षादिमत्तया ज्ञात एवान्वयानुभवजनक इत्याकाङ्क्षादिज्ञानमपि शाब्दबोधे सहकारि । तत्र यस्य पदस्य यत्पदं विना स्वार्थान्वयानुभवजनकत्वाभावः[1], तस्य पदस्य तेन पदेन सह स एवान्वयानुभवजनकत्वाभाव[2] आकाङ्क्षा । न चैवं घटः कर्मत्वमित्यत्रापि घटपदस्यानयनपदं विनान्वयाननुभावकत्वात् तेन सह साकाङ्क्षता स्यादिति वाच्यम् । यस्य पदस्य यत्पदव्यतिरेकप्रयुक्तमन्वयाननुभावकत्वमिति विवक्षितत्वाद् । घटः कर्मत्वमित्यत्र नानयनपद[3]प्रयुक्तमननुभावकत्वम् । तस्मिन् सत्यप्यन्वयाननुभवात् । किन्तु स्वरूपायोग्यत्वप्रयुक्तमिति भवति तद्व्युदासः । पदपदं च पदोपस्थितिपरम् । तेन स्वरूपसतः पदस्य स्वत एवाननुभावकत्वान्नेतरपदव्यतिरेकप्रयुक्तमननुभावकत्वमित्यसम्भव इत्यपास्तम् । न चैवमपि पटो भवतीत्यत्र पटपदस्य रक्तपदसाकाङ्क्षता स्यात्, पटपदोपस्थितेः रक्तपदोपस्थितिव्यतिरेकप्रयुक्तत्वाद्

१. 'स्ववाक्यान्व' क. पाठः. २. 'याननुभव आ' क. पाठः. ३. 'यनप' ख. पाठः.

रक्तपदार्थान्वितपटपदार्थान्वयाननुभावकत्वस्येति वाच्यम्। सम-भिव्याहृतेति यत्पदविशेषणाद्, रक्तपदस्य च समभिव्याहारा-भावान्न तत्पदेन साकाङ्क्षता। न चैवमपि पुरुषान्तरं प्रति जनितान्वयबोधस्य पुरुषान्तरं प्रति साकाङ्क्षता न स्याद्, अ-न्वयाननुभावकत्वाभावादिति वाच्यम्। यत्पुरुषीयेत्यन्वयानु-भवविशेषणात्। न चैवमपि घटः कर्मत्वमित्यभेदान्वयाननुभव-स्य कर्मत्वपदोपस्थितिव्यतिरेकप्रयुक्ततया क्रियाकर्मभावान्वयेऽपि साकाङ्क्षता स्यादिति वाच्यम्। यादृशेत्यप्यन्वयानुभवविशेष-णात्। न चैवमपि द्विर्जानीयामितीच्छायामेकान्वयबोधे सति निराकाङ्क्षतापत्त्या द्वितीयान्वयबोधो न स्यादिति वाच्यम्। सिद्धीच्छाविरहसहकृतेत्यप्यन्वयानुभवविशेषणात्। एवञ्च यत्प-दोपस्थितेर्यत्पदोपस्थितिव्यतिरेकप्रयुक्तो यत्पुरुषीययादृशसिद्धी-च्छाविरहसहकृतान्वयानुभवजनकत्वाभावः, तत्पुरुषीयतादृश-सिद्धीच्छाविरहसहकृतान्वयानुभवे जनयितव्ये तत्पदोपस्थिते-स्तत्पदोपस्थित्या सह तत्पुरुषीयतादृशसिद्धीच्छाविरहसहकृता-न्वयानुभवजनकत्वाभावस्तत्पदोपस्थितिविषययोः पदयोराकाङ्-क्षेति लक्षणनिष्कर्षः।

नन्वेवमपि, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपदस्य पुरुषपदेन साकाङ्क्षता स्यात्[3]। पुरुषपदार्थान्वित-स्वार्थाननुभावकत्वस्य पुरुषपदव्यतिरेकप्रयुक्तत्वादिति चेद्, न।

१. 'याननुभावकत्ववि' क. पाठः. २. 'द्विवज्जानी' क. पाठः. ३. 'त्। तत्पुरु' ख. पाठः.

तात्पर्यग्रह इष्टत्वात् । तदग्रहे तु तदभावादेव न तदन्वितस्वार्थबोधकतापत्तिः । नन्वेवं तात्पर्यग्रहस्य हेतुत्वे किमाकाङ्क्षाज्ञानेन । अयमेतीत्यत्र तात्पर्यग्रहाभावादेव पुरुषान्वयाननुभवोपपत्तेः । घटः कर्मत्वमित्यत्रापि स्वरूपायोग्यतयैवान्वयाननुभवसम्भवात् । जनितान्वयबोधे च वाक्ये परोक्षज्ञानत्वावच्छेदेनानुमितौ सिद्धेः प्रतिबन्धकत्वकल्पनादन्वयानुभवस्यैव प्रतिबन्धकत्वादन्वयाननुभवोपपत्तेः । तस्मादुक्ताकाङ्क्षाज्ञानं[1] न हेतुरिति चेद् , न । सिद्धेः प्रतिबन्धकत्वं न साक्षाद् , ग्राह्याभावानवगाहित्वात् । ततश्च शाब्दज्ञानजनकीभूतान्वयानुभवाभावरूपाकाङ्क्षाज्ञानविघटकतयैव प्रतिबन्धकत्वं वाच्यमित्याकाङ्क्षाज्ञानस्य हेतुत्वमङ्गीकार्यम् । न च सिद्धौ जातायामपि तदनिश्चयेन सिद्ध्यभावज्ञानसम्भवात् सिद्धेः कथमाकाङ्क्षाज्ञानप्रतिबन्धकत्वमिति वाच्यम् । योग्यानामात्मविशेषगुणानां स्वरूपसतां स्वविषयसंशयविपर्ययविरोधित्वात् । वस्तुतस्तु—यथानुमितौ सिद्ध्यभावरूपा पक्षता स्वरूपसत्येव हेतुः, तथा शाब्दसिद्ध्यभावरूपाकाङ्क्षापि स्वरूपसत्येव हेतुः । न चैवमाकाङ्क्षाभ्रमाच्छाब्दज्ञानानुपपत्तिरिति वाच्यम् । इष्टत्वात् । अत एव घटः कर्मत्वमित्यादेः स्वरूपायोग्यतेति दिक् ।

केचित्तु—विभक्तिविशेषवत्पदसमभिव्याहार एवाकाङ्क्षा । सा च न स्वरूपसती हेतुः । पदान्तरसमभिव्याहारेऽपि तदश्रवणेऽन्वयबोधादर्शनात् , पदान्तरसमभिव्याहारेऽपि विभक्ति-

१. 'क्तं तदाका' ख. पाठः.

विशेषाभावेऽन्वयबोधाभावाच्च । (तस्मात्) तादृशाकाङ्क्षाज्ञानं हेतुरित्याहुः ॥

इत्याकाङ्क्षावादः ।

### अथ योग्यतावादः ।

योग्यता च वाक्यार्थरूपा । सा च न स्वरूपसती हेतुः । प्रत्यक्षातिरिक्तज्ञानस्य विषयाजन्यत्वाद्, अतीतादिस्थले वाक्यार्थरूपायास्तस्या अभावाच्च । किन्तु[1] संशयसाधारण्येन[2] तज्ज्ञानमेव हेतुः । अत एव योग्यताभ्रमाच्छाब्दभ्रमः । किञ्च, शाब्दप्रमात्वावच्छेदेनानुगतस्य गुणान्तरस्याभावेन योग्यताप्रमाया एव गुणत्वेन हेतुत्वसिद्धौ 'यद्विशेषयोः कार्यकारणभावः, बाधकं विना तत्सामान्ययोरपी'ति न्यायेन योग्यताज्ञानत्वेन शाब्दज्ञानत्वेन (च) हेतुहेतुमद्भावकल्पनात्[3] । न च योग्यतासंशयस्यापि हेतुत्वे तस्य भ्रमतया न शाब्दप्रमायां तस्य गुणत्वसम्भव इति वाच्यम् । संशयस्याप्येककोटौ प्रमात्वेन गुणत्वसम्भवात् । ननु[4] वाक्यकारणीभूतवाक्यार्थप्रमैव गुणः । शुकादिवाक्येऽप्यैश्वरस्य तस्य सत्त्वात् । अतो न गुणानुरोधेन योग्यताज्ञानहेतुत्वसिद्धिरिति चेद्, न । फलोपपादकं हि फलाश्रय एव कल्पयितुं युक्तम् । अत एव स्वर्गोपपादकमदृष्टं स्व-

१. 'न्तु तत्संश' ख. पाठः. २. 'णं त' क. पाठः. ३. 'ञ्च ।' ख. पाठः. ४. 'च' ख. पाठः.

र्गाश्रय आत्मन्येव कल्प्यते। ततश्च शाब्दप्रमाश्रयगतस्यैव योग्यताज्ञानस्य[1] गुणत्वकल्पनं युक्तम्। अत एवायोग्यताज्ञानस्य प्रतिबन्धकतया तदभाव एव हेतुः, विशिष्टज्ञानत्वावच्छेदेनासंसर्गाग्रहस्य हेतुत्वकल्पनाद्, न तु योग्यताज्ञानं हेतुरित्यपास्तं, गुणत्वानुरोधेन योग्यताज्ञानस्य हेतुत्वावश्यम्भावात्। किञ्च शाब्दबोधहेतौ पदज्ञाने विषयतया[2] योग्यताया अवच्छेदकत्वमात्रकल्पनं युक्तं, न त्वभावस्य हेतुत्वकल्पनं, गौरवात्। अत एवेष्टपुरोवर्तिज्ञाने प्रवृत्तिहेतौ विषयतया वैशिष्ट्यमवच्छेदकं कल्प्यते, न तु भेदाग्रहरूपहेत्वन्तरमिति दिक्।

मणिकृतस्तु—एकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावो योग्यतेत्याहुः। नन्वत्रैकेति किं पदविशेषणमुत पदार्थविशेषणम्। नाद्यः। गच्छतीत्यादौ लडर्थकृतिवर्तमानत्वयोर्भिन्नपदोपस्थाप्यत्वाभावेन योग्यताविरहादन्वयबोधो न स्यात्। न द्वितीयः। प्रमेयत्वे प्रमेयत्वमित्यत्र पदार्थभेदाभावेन योग्यता न स्यादिति चेद्, न। एकपदार्थसंसर्गे तदाश्रयत्वाभिमतनिष्ठत्वस्य विवक्षितत्वात्। अत्र च शब्दवदाकाशमित्यत्राकाशरूपपदार्थस्य शब्दरूपपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाद् योग्यता न स्यादित्यत उक्तमेकपदार्थसंसर्ग इति। ततश्चाकाशसंसर्गः शब्दे ने-

१. 'स्यैव गु' क. पाठः. २. 'या अ' ख. पाठः.

त्यप्रतीते[1]राकाशसंसर्गे शब्दनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावसत्त्वान्न तत्र योग्यताविरहः। ननु वृक्षः संयोगीत्यत्र संयोगसंसर्गस्य वृक्षनिष्ठात्यन्ताभावप्रतियोगित्वादव्याप्तिः। न च संयोगसंसर्गरूपस्य समवायस्य वृक्षे सत्त्वान्न तन्निष्ठाभावप्रतियोगित्वमिति वाच्यम्। एवं सति वायू रूपवानित्यपि योग्यं स्यात्। यदि च समवायस्यैकत्वेन वायौ रूपसमवायसत्त्वेऽपि रूपनिरूपितसमवायो नास्त्येवेति रूपसंसर्ग[2]स्य वायुनिष्ठात्यन्ताभावप्रतियोगित्वमेवेति नातिव्याप्तिः। तर्हि वृक्षेऽप्यग्रावच्छेदेन संयोगनिरूपितसंसर्गाभावात् संयोगसंसर्गस्यापि वृक्षनिष्ठात्यन्ताभावप्रतियोगित्वादव्याप्तिरिति चेद्, न। अत्यन्ताभाव[3]पदस्य विरोधिपरत्वात्। विरोधित्वं च प्रतियोग्यसमानाधिकरणत्वम्। संयोगसंसर्गा[4]त्यन्ताभावश्च प्रतियोगिसमानाधिकरण एवेति तादृशात्यन्ताभावप्रतियोगित्वेऽपि[5] संयोगसंसर्गस्य नाव्याप्तिः। न चैवमपि गन्धप्रागभावविशिष्टो[6] घटो गन्धवानित्यत्रातिव्याप्तिः, गन्धप्रागभावस्यापि प्रतियोगिसमानाधिकरणत्वेनाविरोधितया गन्धसंसर्गस्य घटनिष्ठप्रागभावप्रतियोगित्वेऽपि विरोध्यप्रतियोगित्वादिति वाच्यम्। एककालावच्छेदेन प्रतियोग्यसमानाधिकरण[7]त्वस्यैवात्र विरोधित्वेन विवक्षितत्वात्। गन्धप्रागभावश्च तादृश इति तत्प्रतियोगित्वाद् गन्धसंसर्गस्य,

---

१. 'त्याका' ग. पाठः. २. 'र्गे वा' ख. पाठः. ३. 'वप्रतियोगित्वे प' क. पाठः. ४. 'र्गस्यात्य' ग. पाठः. ५. 'पि संस' क. पाठः. ६. 'ष्ट' क. पाठः. ७. 'णस्यै' ख. पाठः.

नातिव्याप्तिः । संयोगसंसर्गात्यन्ताभावस्त्वेककालावच्छेदेन प्रतियोगिसमानाधिकरणत्वान्न विरोधीति तत्प्रतियोगित्वेऽपि संयोगसंसर्गस्य, नाव्याप्तिः । न चोक्ताभावप्रतियोगित्वाभाव इत्येवास्त्विति वाच्यम् । यन्मते प्रमात्वग्रहः प्रतिबन्धकस्तन्मतेनास्य लक्षणस्योक्तत्वात् । न चैवमपि सेकसंसर्गे आकाशश्च जलनिष्ठात्यन्ताभावप्रतियोगिनावित्यत्राकाशांशे प्रमारूपबुद्धिविशेष्यतया सेकसंसर्गस्य, जलेन सिञ्चतीत्यत्राव्याप्तिरिति वाच्यम् । यत्पदार्थसंसर्गे तादृशप्रमाविशेष्यत्वाभावः, तदंशे योग्यतेति विवक्षितत्वात् । एवञ्चांशभेदप्राप्तये एव विशेष्यपदमुपात्तमिति न तद्वैयर्थ्यमिति दिक् ।

इयं च योग्यता स्वरूपसत्येव हेतुः । न ह्यतीतादौ वाक्यार्थरूपयोग्यतावदुक्ताभावरूपयोग्यतापि नास्ति, येन तज्ज्ञानपर्यन्तापेक्षा स्यात् । एतेनैतद्योग्यताज्ञानाभावेऽप्येकपदार्थसंसर्गेऽपरपदार्थनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वप्रमाविशेष्यत्वाभावरूपाया अन्योन्याभावगर्भयोग्यताया ज्ञानेऽपि शाब्दबोधो न स्याद्, विनिगमनाविरहाद् द्वयोरपि प्रत्येकं हेतुत्वे चाननुगम इत्यपास्तम् । अत्यन्ताभावान्योन्याभावगर्भयोग्यतादीनां स्वरूपसतीनामेव हेतुत्वाद् गुणत्वाच्चेति दिक् । केचित्तु घनगर्जितस्थलेऽनुमितिवदाकस्मिकपदश्रवणमात्रादन्वयानुभवाद् वाक्यार्थरूपयोग्यताज्ञानमपि न हेतुः, किन्तु गुरुरप्ययोग्य-

१. 'माप्र' क. पाठः. २. 'ञ्चेत्य' क. पाठः. ३. 'यत्सं' क. पाठः. ४. 'र्थनि' ख. पाठः. ५. 'वादिग' क. पाठः. ६. 'पादियो' ख. पाठः.

तानिर्णयाभाव[1] एव हेतुरित्याहुः ॥

इति योग्यतावादः ।

## अथासत्तिवादः ।

'आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिरि'ति मणिकृतः । गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यनासन्नवाक्ये[2]ऽप्यव्यवधानेनास्ति पदार्थोपस्थितिरित्यतिव्याप्तिनिरासायान्वयप्रतियोगीति। तत्र च परस्परान्वययोग्ययोः पदार्थयोर्नाव्यवधानेनोपस्थितिरिति भवति तद्व्युदासः । तावन्मात्रं च तत्रैवातिव्याप्तमित्यव्यवधानेनेति । अव्यवधानं च परस्परान्वयधीविरोधि[3]पदार्थोपस्थितिव्यवधानाभावः । तेन

"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥"

इत्यादौ परस्परान्वययोग्ययोः वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वराविति पदार्थयोरव्यवधानेनोपस्थित्यभावेऽपि नाव्याप्तिः । नन्वेवमासत्तिज्ञानं हेतुरिति सिद्धान्तविरोधः, पदार्थोपस्थितिज्ञानस्यान्वयबोधाहेतुत्वादिति चेद्, अत्राहुः—अन्वयप्रतियोगिनोरुपस्थितिरनेनेति व्युत्पत्त्याव्यवधानेनान्वयप्रतियोग्युपस्थित्यनुकूलतात्पर्यस्यैवासत्तित्वेनाभिमतत्वात् । शुकादिवाक्येऽपि

१. 'श्च' ख. पाठः. २. 'क्येऽव्य' क. पाठः. ३. 'धी प' क. पाठः.

भगवत्तात्पर्यसत्त्वान्नाव्याप्तिः। न चैवमासत्तिभ्रमस्थलेऽपि भगवत्तात्पर्यसत्त्वादतिव्याप्तिरिति वाच्यम्। तत्रानासन्नत्वव्यवहारेण तदिच्छाया अव्यवहितत्वप्रकारकत्वानवधारणादिति दिक्। वस्तुतस्तु एतादृशतात्पर्यज्ञानस्य प्रकरणादिवद् वाक्यार्थतात्पर्यग्रह एवोपयोगो नान्वयबोधे, वाक्यार्थतात्पर्यग्रहे सत्येतद्विलम्बेनान्वयबोधविलम्बाभावात्। तस्मादव्यवहितान्वयप्रतियोग्युपस्थितिरेवासत्तिः। सा च स्वरूपसत्येव हेतुरिति दिक्।

ननु प्रत्येकवर्णानुभवजनितसंस्कारैः प्रत्येकवर्णस्मृतिरेव भवति, न वर्णसमुदायात्मक(पद)ज्ञानम्। तदभावाच्च न पदार्थस्मृतिरिति कथमासत्तेरन्वयबोधाङ्गत्वमिति चेद्, न। तत्तद्वर्णानुभवजनितसंस्कारसचिवेनान्तिमवर्णश्रवणेन तावद्वर्णात्मकपदानुभवस्य ततोऽर्थस्मृतेश्चाविरोधात्[1]। नन्वेवमप्युत्तरोत्तरपदार्थस्मृत्या[2] पूर्वपूर्वपदार्थस्मृतिनाशादेकदा तावत्पदार्थस्मृत्यभावेन तावत्पदार्थसंसर्गबुद्ध्यसंभवेन कथमासत्तेरन्वयबोधाङ्गत्वमिति चेद्, न। तत्तत्पदानुभवजनितसंस्कारैरेकदा तावत्पदस्मृत्या युगपत् तावत्पदार्थोपस्थितावन्वयबोधाविरोधात्। नन्वेवमपि त्रिचतुरपदार्थस्मृत्यावान्तरवाक्यार्थबोधे[3] पुनरप्येवमवान्तरवाक्यान्तरार्थबोधे च जाते तदुभयवाक्यार्थस्मृत्यां[4] महावाक्यार्थबोधसम्भवात् तावत्पदस्मृतिपूर्वकतावत्पदार्थस्मृतिकल्पनं कि-

१. 'तेरप्यवि' ख. पाठः. २. 'मुत्त' ख. पाठः. ३. 'त्या वाक्या' क. पाठः. ४. 'त्यां' ख. पाठः.

मर्थमिति चेद्, न। पदविशेषजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गत्वात् तथाकल्पनावश्यम्भावात्। यत्र तु श्रीः स्तां[1]दित्येकैकवर्णात्मकमेव पदद्वयं, तत्र प्रथम[2]पदप्रत्यक्षानन्तरं द्वितीयपदप्रत्यक्षम्। ततो विनश्यदविनश्यदवस्थाभ्यां पदानुभवाभ्यां युगपत् पदार्थस्मृतिः। तथा च स्मृत्यान्वयधीसम्भवान्न समूहालम्बनस्मृत्यपेक्षेति दिक्॥

इत्यासत्तिवादः।

## अथ शब्दाध्याहारवादः।

ननु यदुक्तं पदविशेषजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गत्वात् तावत्पदस्मृतिरावश्यकीति, तदयुक्तम्। पदार्थोपस्थितिमात्रस्य लाघवेनान्वयबोधाङ्गत्वात्। अत एव द्वारमित्यादौ न पिधेहीति पदाध्याहारः, किन्तु तदर्थस्यैवाध्याहारः। न चैवं घटः कर्मत्वमानयनं कृतिरित्यत्रापि पदार्थोपस्थितिसत्त्वेनान्वयबोधः स्यादिति वाच्यम्। तावता विभक्तिविशेषासमभिव्याहृत[3]पदाजन्यपदार्थोपस्थिति[4]रन्वयबोधाङ्ग[5]मस्तु। तादृशोपस्थितिश्चार्थाध्याहारेऽप्यविकला। न चैतदपेक्षया विभक्तिविशेषसमभिव्याहृतपदजन्यपदार्थोपस्थितेरेव लाघवादन्वयबोधाङ्गत्वं युक्तमिति नार्थाध्याहार इति वाच्यम्। एवमपि विभक्तिविशेषस-

१. 'स्या' ख. पाठः. २. 'मप्र' ख. पाठः. ३. 'ताज' क. पाठः. ४. 'ते' क. पाठः. ५. 'ङ्गत्वम' क. पाठः.

मभिव्याहृतपदत्वेनान्वयानुभावकत्वमङ्गीक्रियताम् । तत एव घटः कर्मत्वमित्यत्रान्वयबोधापत्तिवारणात् । न तु पदविशेषजन्यपदार्थोपस्थितेरप्यन्वयबोधाङ्गत्वं, गौरवात् । पिधेहीत्यत्रापि विभक्तिविशेषसमभिव्याहृतं पिधेहिपदमेवाध्याहृतद्वारपदार्थान्वितस्वार्थानुभावकं, पदानामुपस्थितपदार्थान्तरान्वितस्वार्थानुभावकत्वव्युत्पत्तेः । अत एव गङ्गायां घोष इत्यत्र लाक्षणिकमननुभावकमिति मते घोषपदस्यैव तीरान्वितस्वार्थानुभावकत्वमिति सिद्धान्तः । न चैवं गङ्गापदे[1] लक्षणा न स्यात्, परम्परयोपस्थितस्यापि तीरस्यान्वयबोधोपपत्तेरिति[2] वाच्यम् । विभक्तेः प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः सप्तम्यर्थाधारत्वान्वयार्थं तत्र लक्षणावश्यकत्वात् । अत एवाकाशे शब्द इत्यत्राकाशपदात् समवायसम्बन्धेनोपस्थितस्याप्याकाशस्यान्वयानुभवविषयत्वसम्भवादाकाशपदे[3] शक्तिर्न स्यादित्यपास्तम् । तत्रापि विभक्त्यर्थान्वयार्थं शक्तेरावश्यकत्वात् । न चैवमपि पुष्पेभ्य इत्यत्र स्पृहयतिपदाध्याहार आवश्यकः, स्पृहयतिपदयोग एव चतुर्थ्या अनुशासनेन साधुत्वात् । तदर्थयोगेऽपि साधुत्वे पुष्पेभ्य इच्छतीत्यपि स्यादिति वाच्यम् । तावता क्वचित् साधुत्वार्थं पदाध्याहारेऽप्यन्वयानुभवार्थं[4] न तदपेक्षेत्यन्यत्रार्थाध्याहार एव युक्त इति चेद्, अत्रोच्यते—यदि विभक्त्यादिसमभिव्याहृतं पदमेव

१. 'देन ल' ख. पाठः. २. 'त्ति' क. पाठः. ३. 'स्या का' क. पाठः. ४. 'र्थे तदनपे' ख. पाठः.

तन्त्रं, तदा घटमानयनं कृतिरित्यत्राप्यन्वयानुभवः स्यात्। तत्रापि घटमिति विभक्तिविशेषसमभिव्याहृतपदस्य[1] सत्त्वात्। अतो विभक्तिविशेषसमभिव्याहृतपदविशेषजन्यपदार्थोपस्थिते-रप्यन्वयबोधाङ्गत्वमेष्टव्यामिति नार्थाध्याहारः। न चैवं मीमांस-केन पिधेहीत्युक्ते नैयायिकस्य द्वारमिति पदाध्याहारो न स्याद्, वक्तृतात्पर्यविषयीभूतं पदं नेति निश्चयेन तत्कल्पनासम्भवादिति वाच्यम्। तत्रापि पिधेहिपदं द्वारान्वयबोधानुकूलोपस्थितिमद-भिहितमिति सामान्यतः पदजन्योपस्थितेरनुमानसम्भवात्। समानप्रकारकबाधस्यैव प्रतिबन्धकतया पदजन्योपस्थितित्वप्र-कारे (?) सत्यपि सामान्यतस्तदनुमित्यविरोधात्। न चैवमपि द्वारादिपदार्थवाचकपदानामनेकत्वेन पदविशेषाध्याहारे माना-भाव इति वाच्यम्। संस्कारोद्बोधवशेन कदाचित् कस्यचिदध्या-हारेण ततोऽर्थोपस्थित्यविरोधादिति दिक्॥

इति शब्दाध्याहारवादः।

## अथ तात्पर्यवादः।

एवं तात्पर्यज्ञानमपि[2] शाब्दबोधे हेतुः। अन्यथा नाना-र्थस्थले विनिगमनाभावापाताद्, गङ्गायां घोष इत्यत्र तात्पर्या-[3]ग्रहे गङ्गापदमेव लक्षकं न घोषपदमिति लक्षकपदनियमानुपप-त्तेश्च। तथा घोषाधारतायोग्य[4]तीरव्यतिरिक्तनिबिडद्रव्यान्तरल-

---

१. 'क्तिस' ख. पाठः. २. 'नं शा' ख. पाठः. ३. 'र्यग्रहणे ग' क. पाठः. ४. 'ग्यनि' क. पाठः.

क्षणयाप्यन्वयानुपपत्तिशान्तेर्लक्ष्यनियमानुपपत्तेश्च । न च तदर्थप्रतीतीच्छयोच्चरितत्वरूपं तात्पर्यं मौनिश्लोकादौ ग्रहीतुमशक्यमिति वाच्यम् । तदर्थप्रतीतीच्छया प्रतिसन्धीयमानत्वस्यैव तात्पर्यत्वात् । तच्च भगवत्ताद्दशेच्छाजन्यशुकादिप्रतिसन्धानविषयत्वेन शुकादिवाक्येऽप्यक्षतमिति न तद्ग्रहदौर्भिक्ष्यमिति दिक् ।

नन्वेवं यत्र नानार्थस्थले वक्तुरुभयान्वयबोधे तात्पर्यं श्रोतुश्चोभयत्र तात्पर्यग्रहः, तत्रोभयान्वयबोधापत्तिः । न चेष्टापत्तिरिति वाच्यम् । सकृदुच्चरितस्य शब्दस्य सकृदर्थप्रत्यायकत्वव्युत्पत्तेः, एकं पदमेकदैकमर्थमेवानुभावयतीति व्याप्तेश्च । न च पुष्पवन्तादिपदे[2] व्युत्पत्तिव्याप्त्योर्व्यभिचार इति वाच्यम् । एकशक्त्यानेकोपस्थापकपदातिरिक्तस्थले तथापि व्यभिचाराभावाद्, इति चेद्, अत्र प्राञ्चः— उक्तव्युत्पत्तिव्याप्तिरूपविशेषदर्शनान्न वक्तुस्तथा तात्पर्यं, न वा श्रोतुस्तथा तात्पर्यज्ञानमित्याहुः । तदयुक्तम् । विशेषदर्शनशून्यस्थलेऽस्य वक्तुः श्रोतुश्च तथा तात्पर्यस्य तज्ज्ञानस्य च सम्भवाद्[3]उक्तोभयान्वयबोधस्यानिवार्यत्वाद्, गङ्गायां मत्स्यघोषावित्यत्र क्रमेणान्वयबोधे विनिगमनाविरहेणोभयान्वयबोधस्य युगपदङ्गीकार्यतया व्युत्पत्तिव्याप्त्योरसिद्धेश्च । तस्मादुभयतात्पर्यग्रह उभयान्वयबोधो नानिष्ट इति नव्याः ॥

इति तात्पर्यवादः ।

१. 'वदादि' क. पाठः. २. 'दे उभयव्यु' ख. पाठः. ३. 'दुभ' क. पाठः.

अथ शब्दानित्यत्ववादः ।

नन्वेवमपि[1] न वक्तृतात्पर्याधीनं सर्वत्र शब्दप्रामाण्यम् । वेदस्य नित्यत्वेन तत्र वक्तुरभावात् । न च तस्य नित्यत्वमसिद्धं, वर्णानामनित्यत्वेन तत्समुदायात्मकवेदस्याप्यनित्यत्वादिति वाच्यम् । स एवायं गकार इति प्रत्यभिज्ञया गकारादेस्तावत्कालावस्थानसिद्धौ तन्नाशकाभावेन नित्यत्वसिद्धेः । तदुक्तं— 'तावत्काले[2]स्थितं चैनं कः पश्चान्नाशयिष्यती'ति । न चेयं[3] प्रत्यभिज्ञा तज्जातीयैक्यविषयिणीति वाच्यम्[4] । व्यक्त्यभेदविषयत्वे बाधकाभावात् । न च गकार उत्पन्न इत्याद्युत्पत्तिविनाशप्रत्यय एव बाधक इति वाच्यम्[5] । उत्पादादिप्रतीतेर्व्यञ्जकध्वन्याद्युत्पादाद्यारोपरूपत्वात् । न च प्रत्यभिज्ञायास्तज्जातीयाभेदविषयत्वमुत्पादादिप्रती[6]तेरप्युत्पादादिविषयत्वमित्युभयोरनारोपरूपत्वं सम्भवत्युत्पादादिप्रतीतेरारोपरूपत्वकल्पनमयुक्तमिति वाच्यम् । तर्ह्युत्पादादिप्रत्ययस्य परम्परया व्यञ्जकोत्पादादिविषयत्वमस्तु, तावताप्युभयप्रमात्वसिद्धेः । तस्माद्[7] वर्णा नित्या इति वेदे वक्तुरभावान्न वक्तृतात्पर्याधीनं सर्वत्र शब्दप्रामाण्यमिति चेद्, न । एवमपि विनिगमनाविरहान्न वर्णानां नित्यत्वसिद्धिः । प्रत्युतोत्पादादिप्रत्ययस्य परम्परया ध्वन्याद्युत्पादादिविषयकत्वे

१. 'पि व' क. पाठः. २. 'ले' क. पाठः. ३. 'चैवं प्र' क. पाठः. ४. 'यवि' ख. पाठः. ५. 'म् । वर्णाभे' क. पाठः. ६. 'ते स्तुला' ख. पाठः. ७. 'द' क. पाठः.

परम्पराघटकतया ध्वन्यादेरपि तत्प्रतीतिविषयत्वं कल्प्यम् । प्रत्यभिज्ञायास्तु तज्जातीयाभेदविषयत्वे[1] च गत्वं गकारोऽभेदश्च विषय इति नातिरिक्त[2]विषय[3]कल्पनम् । नचैवं विषयभेदाभावे क्वचित् सोऽयमिति, क्वचिच्च तज्जातीयोऽयमिति धीरित्यत्र किं नियामकमिति वाच्यम् । यत्र जातेः स्वरूपेण प्रतीतिस्तत्र सोऽयमिति धीः, यत्र तु जातित्वप्रकारकतत्प्रतीतिस्तत्र तज्जातीयोऽयमिति धीरिति गृहाण । किञ्च, सैवेयं गु[4]र्जरीति प्रत्यभिज्ञया ध्वनिरपि नित्यः स्यात् । यदि च त[5]दुत्पादादिप्रत्ययस्य तद्व्यञ्जक[6]यत्नाद्युत्पादादिविषयकत्वकल्पने[7] गौरवात् सा प्रत्यभिज्ञा तज्जातीयत्वविषया, तदा प्रकृतेऽपि दीयतां दृष्टिः । अपि च तारत्वमन्दत्वरूपविरुद्धजातिमत्त्वमेकस्य गकारस्य न सम्भवतीति प्रत्यभिज्ञायास्तज्जातीयत्वविषयकत्वकल्पनमेव युक्तम् ।

ननु तारत्वमन्दत्वे न जाती, गत्वादिना साङ्कर्यप्रसङ्गात् । किन्तूपाधी । उपाध्योश्च परस्परपरिहारेण वर्तमानयोरपि भूतत्वमूर्तत्वयोरिवैकत्र समावेशो न विरुद्ध इति चेद्, न । उत्कर्षापकर्षरूपतया तारत्वमन्दत्वयोर्जातित्वासिद्धौ साङ्कर्यपरिहाराय गत्वादिव्याप्ययोस्तयोर्नानात्वकल्पनात् । न चैवमननुगम इति वाच्यम् । सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वेन तारत्वस्य, सजातीयसाक्षात्कारप्रतिबन्ध्यतावच्छेदकत्वेन

---

१. 'त्वेऽपि ग' ख. पाठः. २. 'क्तं' क. पाठः. ३. 'यत्वक' क. पाठः. ४. 'कौ' ख. पाठः. ५. 'तत्तदु' ख. पाठः. ६. 'काद्यु' क. पाठः. ७. 'नागौ' ख. पाठः. ८. 'स' क. पाठः.

मन्दत्वस्य चानुगमात् । एतेन तारत्वादेर्जातित्वेऽस्मादयं तार इति सावधिकत्वं न स्यादित्यपास्तं, तादृशोपाधेरेव[1] सावधिकत्वात् । किं बहुना, मध्यमगकारे पूर्वगकारापेक्षया तारत्वमुत्तरगकारापेक्षया च मन्दत्वमनुभूयते । तथाच पूर्वापरगकारयोर्मध्यमगकारस्य चैक्ये स्वस्मिन् स्वप्रतियोगिकयोस्तारत्वमन्दत्वयोर्विरोधाद् गकारभेदोऽवश्यं वाच्यः । तथा प्रतिपुरुषं गकारादिवैलक्षण्यमनुभवसिद्धम् । अन्यथा देवदत्ताद्यनुमानं शब्दविशेषान्न स्यात् । अतः प्रतिपुरुषं गकारभेदोऽङ्गीकार्यः । न चैवं प्रतिपुरुषं गकारभेदे देवदत्तप्रभवत्वानुमापकजातिं विना गत्वस्य पुरुषान्तरगकारे वृत्तेः, गत्वं च विना तादृशजातेर्देवदत्तघकारे[2] वृत्तेर्द्वयोश्च देवदत्तगकारे समावेशाज्जातिसाङ्कर्यं स्यादिति वाच्यम् । प्रतिपुरुषं गत्वादिजातेरपि नानात्वकल्पनादिति दिक् । तस्माद् वर्णानामनित्यतया वेदस्याप्यनित्यत्वात् तत्रापि वक्तृतात्पर्याधीनमेव प्रामाण्यमिति वेदतात्पर्याश्रयतयापि भगवत्सिद्धिरिति दिक् ॥

इति शब्दानित्यत्ववादः ।

अथ वेदपौरुषेयत्ववादः ।

नन्वेवमस्तु वक्तृतात्पर्याधीनं वेदप्रामाण्यम् । तथापि नेश्वरसिद्धिः । तात्पर्यं हि तत्प्रतीतीच्छयोच्चारितत्वम् । ततश्च

१. 'धित्वा' क. पाठः. २. 'क' ख. पाठः.

पूर्वपूर्वाध्यापकोच्चारणादेवोत्तरोत्तरवेदप्रामाण्यसिद्धेः किमीश्वरेण। न चैवमर्थानभिज्ञाध्यापकोच्चा[1]रिताद् वेदा[2]दर्थप्रत्ययो न स्यादिति वाच्यम् । अर्थज्ञानवद्व्यासाद्युच्चा[3]रितजातीयत्वेन तत्राप्यर्थप्रतीत्युपपत्तेः । अन्यथा तत्राप्यगतेः। इदानीन्तनवेदस्येश्वरानुच्चा[4]रितत्वादिति चेद्, न । तदर्थप्रतीतीच्छाजन्यमुच्चारणमेव तात्पर्यं, लाघवात् । मूर्खाध्यापकवेदोच्चारण[5]मपि तदर्थप्रतीतिविषयकभगवदिच्छाजन्यमेवेति नास्म[6]न्मते तत्रार्थज्ञानानुपपत्तिः । भवन्मते तु तदनुपपत्तिरपरिहार्यै[7]त्यनिच्छताऽपि भगवानङ्गीकार्यः । किञ्च, 'वेदाः पौरुषेयाः, वाक्यत्वाद्, भारतादिवाक्यवदि'त्यनुमानादपि भगवत्सिद्धिः । न चाप्रयोजकत्वम्। पौरुषेय[8]त्वे तत्तद्वाक्यत्वस्याननुगततया प्रयोजकत्वासम्भवेन सामान्यतयानुगतत्वाच्च[9] वाक्यत्वस्यैव प्रयोजकत्वात् । अतः सर्वज्ञमीश्वरं विनास्मदादिभिरत्रार्थान्तरासम्भवाद् भगवत्सिद्धिः ।

ननु किमत्र पक्षतावच्छेदकम् । वेदत्वमेवेति चेद्, न तावद् वेदत्वं जातिः । देवदत्तप्रभवत्वानुमापकजात्यादिना सङ्करापत्तेः । नाप्यदृष्टार्थकशब्दत्वम् । स्मृत्यादावतिव्याप्तेः। किञ्च, किमत्र साध्यम् । पुरुषोच्चा[10]रितत्वं चेद्[11], वेदाध्यापकेनार्थान्तरम् । स्वतन्त्रपुरुषोच्चारितत्वं यदि, तदा पठ्यमा-

१. 'च्च' ख. पाठः. २. 'दार्थ' क. पाठः. ३. 'च्च' क. पाठः. ४. 'च्च' क. पाठः. ५. 'णं त' ख. पाठः. ६. 'स्मि' क. पाठः. ७. 'या' ख. पाठः. ८. 'यकत्वे' क. पाठः. ९. 'च्च' ख. पाठः. १०. 'त्वं वे' ख. पाठः. ११. 'द्, अध्यापना' क. पाठः.

नभारते व्यभिचारोऽशतो बाधश्च । नापि स्वतन्त्रपुरुषोक्तो-रितजातीयत्वम् । (तद्वा) वाक्यत्वेन लौकिकशब्दसाजात्यमादाय सिद्धसाधनमर्थान्तरं वा । स्वातन्त्र्यां[2]निरुक्तेश्च नैतदनुमानादी-श्वरसिद्धिरिति चेद्, अत्र मणिकृतः — शब्द[3]तदुपजीवि-प्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्य-वाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् । तदेव पक्षताव-च्छेदकम् । सजातीयोच्चारणानपेक्षोच्चारितजातीयत्वं साध्यम् । तच्च पठ्यमानभारतादावप्यस्तीति न व्यभिचारः । साजात्यं च समानानुपूर्वीकत्वेन विवक्षितम् । अतो न सिद्धसाधनादि-कमित्याहुः । अत्र शब्दः साक्षात् परम्परया वा शब्दोपजीवि च[4] यत् प्रमाणं तदतिरिक्तं यत् प्रमाणं तज्जन्या या प्रमितिः तदविषयार्थकत्वे सतीति सत्यन्तार्थः । तत्र वेदरूपप्रमाणजन्य-प्रमितिविषयार्थकतया 'यागः स्वर्गसाधनमि'त्यनुमानजन्यानुमि-तिविषयार्थकतया चासम्भवः स्यात् । अत उक्तं शब्दतदुपजी-विप्रमाणातिरिक्तेति । उक्तानुमानस्य पक्षादिज्ञानार्थं शब्दोप-जीवित्वेन शब्दोपजीविप्रमाणजन्यप्रमितिविषयार्थकत्वेऽपि तद-नुपजीविप्रत्यक्षादिप्रमाणजन्यप्रमित्यविषयार्थकतया वेदस्य ना-सम्भवः । तथा वेदरूपशब्दप्रमाणजन्यप्रमितिविषयार्थकत्वेऽपि

ननु प्रमितिपदं स्वजन्यज्ञानानतिरिक्तविषयकज्ञानपरमि-ति वक्ष्यते । ततश्च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति वाक्य-

१. 'च' ख. पाठः.   २. 'न्त्र्य' क. पाठः.   ३. 'व' क. पाठः.   ४. 'च प्र' क. पाठः.   ५. 'या ना' क. पाठः.   ६. 'व्दादति' क. पाठः.

जन्यज्ञाने स्वर्गसाधनत्वमात्रं प्रकारः । उक्तानुमानजन्यानुमितौ तु[1] स्वर्गसाधनत्वस्य साध्यतयानुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन स्वर्गसाधनत्वत्वमपि प्रकार इति तादृशानुमितेः स्वजन्यज्ञानातिरिक्तविषयकत्वेन स्वजन्यज्ञानातिरिक्तविषयकतादृशानुमितिविषयार्थकत्वेऽपि स्वजन्यज्ञाना[2]नतिरिक्तविषयकज्ञाना[3]विषयार्थकत्वमस्तीत्यसम्भवाभावात् तदुपजीव्यतिरिक्तत्वविशेषणमयुक्तमिति चेद्, न । तथापि साध्यसाधनभावसम्बन्धेन यागस्यापि स्वर्गसम्बन्धित्वाद् 'यागः स्वर्गवानि'ति यत्र साध्यते, तत्रानुमितेः स्वजन्यज्ञानानतिरिक्तविषयतया तादृशानुमितिविषयार्थकत्वेनासम्भववारणाय तद्विशेषणावश्यंभावात् ।

नन्वेवमपि चैत्रशब्दं श्रुत्वा प्रयुक्ते 'चैत्रः शब्दायत' इति वाक्येऽतिव्याप्तिः । तत्र[4] वाक्ये चैत्रशब्दस्य स्वसाक्षात्कारद्वारोपजीव्यत्वेन शब्दोपजीवितादृशवाक्यरूपप्रमाणजन्यप्रमितिविषयार्थकत्वेऽपि शब्दानुपजीविप्रमाणजन्यप्रमित्यविषयार्थकत्वसत्त्वाच्छब्दजन्यज्ञानजन्यत्वेऽपि शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वरूपोत्तरदलस्यापि सत्त्वादिति चेद्, न । शब्दजन्यवाक्यार्थज्ञानोपजीवित्वस्यैव शब्दोपजीविपदेन विवक्षितत्वात् । तादृशवाक्यस्य शब्दोपजीवित्वेऽपि शब्दजन्यवाक्यार्थ-

१. 'तु स्वर्गसाधनत्वम' क. पाठः. २. 'नाति' क. पाठः. ३. 'न' क. पाठः. ४. 'त्रश' क. पाठः. ५. 'त्र चै' ख. पाठः. ६. 'र्थत्वे' क. पाठः. ७. 'ब्दज्ञा' क. पाठः.

ज्ञानानुपजीवित्वेन[1] शब्दोपजीव्यतिरिक्तं प्रमाणं तदेव[2] वाक्यं तज्जन्यप्रमितिविषयार्थकत्वेन सत्यन्ताभावान्न तत्रातिव्याप्तिः ।

नन्वेवमपि चैत्रवाक्यादर्थं[3] प्रतीत्य 'चैत्रवाक्यादमुमर्थं प्रत्येमी'ति प्रयुक्ते[4] तस्मिन् वाक्येऽतिव्याप्तिः । तस्य वाक्यस्य शब्दजन्यवाक्यार्थज्ञानसापेक्षत्वेन शब्दोपजीवितया शब्दोपजीविताद्दशवाक्य[5]रूपप्रमाणजन्यप्रमितिविषयार्थकत्वेऽपि शब्दानुपजीविप्रमाणजन्यप्रमितिविषयार्थकत्वात् । न चैवमपि शब्दजन्यवाक्यार्थज्ञानाजन्यत्वरूपोत्तरदलाभावान्नातिव्याप्तिरिति वाच्यम् । तत्र च[6] शब्दजन्यवाक्यार्थज्ञानस्य स्वानुव्यवसायद्वारजनकत्वेऽपि साक्षाज्जनकत्वाभावेन ताद्दशवाक्यार्थज्ञानाजन्यत्वस्यापि सत्त्वादिति चेद्, न । स्व[7]जन्यज्ञानान्यूनविषयकशब्दजन्यवाक्यार्थज्ञानसापेक्षत्वं[8] शब्दोपजीवित्वमिह[9] विवक्षितम् चैत्रवाक्यादमुमर्थं जानामीति वाक्यस्य चैत्रवाक्य[10]जन्यवाक्यार्थज्ञानसापेक्षत्वेऽपि चैत्रवाक्यार्थज्ञानस्य स्वजन्यज्ञानविषयीभूतवाक्यार्थज्ञानाविषयकतया स्वजन्यज्ञानान्यूनविषयकशब्दजन्यज्ञानसापेक्षत्वाभावेन विवक्षितशब्दोपजीव्यतिरिक्तं प्रमाणं तदेव वाक्यं, तज्जन्यप्रमितिविषयार्थकत्वेन सत्यन्ताभावान्न तत्रातिव्याप्तिः ।

१. 'जीवनाच्छब्दो' क. पाठः. २. 'व वाक्यजन्य' क. पाठः. ३. 'दमुमर्थं' क. पाठः. ४. 'क्ते वा' क. पाठः. ५. 'क्यज' ख. पाठः. ६. 'चैत्रय' क. पाठः. ७. 'स्वान्यू' क. पाठः. ८. 'त्वमिह श' ख. पाठः ९. 'ति' ख. पाठः. १०. 'जवा' ख. पाठः.

नन्वेवं यागेतराजन्यस्वर्गो यागजन्यः तदितराजन्यत्वे सति जन्यत्वादित्यनुमानजन्यानुमितिविषयार्थकत्वाद् वेदस्यासम्भवः । तत्रानुमितौ वेदवाक्यजन्यज्ञानाविषयस्यापि पक्षतावच्छेदकस्य विषयतया स्वजन्यज्ञानन्यूनविषयकशब्दजन्यज्ञानसापेक्षत्वेऽपि लिङ्गपरामर्शस्य, स्वजन्यज्ञानान्यूनविषयकशब्दजन्यज्ञानसापेक्षत्वाभावेन विवक्षितशब्दोपजीव्यतिरिक्तं प्रमाणं स एव लिङ्गपरामर्श इति तज्जन्यप्रमितिविषयार्थकत्वेन वेदस्यासम्भव इति चेद्, न । प्रमितिपदस्य स्वजन्यज्ञानानतिरिक्त[1]विषयकज्ञानपरतया वक्ष्यमाणत्वेनोक्तानुमितेः शब्दानुपजीविप्रमाणजन्यत्वेऽपि वेदजन्यप्रमित्यनतिरिक्तविष(यार्थ?य)कत्वाभावेन विवक्षितप्रमित्यविषयार्थकत्वसत्त्वान्नासम्भवः ।

केचित्तु — शब्दपदं* यथाश्रुतमेव । न चैवं चैत्रः शब्दायत इत्यत्रातिव्याप्तिः । उत्तरदले वाक्यार्थपदमविवक्षितमिति वक्ष्यमाणतया शब्दजन्यज्ञानजन्ये तस्मिन् वाक्य उत्तरदलाभावादेवातिव्याप्त्यभावात् । चैत्रवाक्यादमुमर्थं जानामीति वाक्यस्यापि परम्परया शब्दजन्यज्ञानजन्यतया तत्राप्युत्तरदलाभावा[2]देवातिव्याप्त्यनवकाशादित्याहुः ।

[3]प्रथमप्रमाणपदं च शब्दोपजीविपदस्य यथाश्रुतपरत्वे वेदवाक्यार्थ[4]ज्ञानजन्यहविराद्युपादानगोचरप्रवृत्तिसाध्यादृष्टविशे-

१. 'क्तार्थत्वप' क. पाठः. २. 'वेनैवा' ख. पाठः. ३. 'प्रमा' क. पाठः. ४. 'र्थरूपशब्दज' क. पाठः.

* शब्दोपजीविपदमिति पाठ्यं भाति ।

षजन्यतया चक्षुरादेरपि परम्परया शब्दोपजीवकतया शब्दोपजीविचक्षुरादिजन्यप्रमितिविषयार्थकत्वेऽपि लौकिकवाक्यस्य तदुपजीव्यतिरिक्तप्रमितिविषयार्थकत्वाभावादतिव्याप्तिः स्यादित्यत उक्तम्। ततश्च यस्य प्रमाणस्य शब्दमूलकत्वं प्रामाण्यव्यवस्थापकं, तदेव शब्दोपजीवीति लभ्यते। यागः स्वर्गसाधनमित्यनुमानस्य वेदमूलकत्वेनैव प्रामाण्यावधारणम्। अन्यथा चैत्यवन्दनं स्वर्गसाधनमित्यनुमानतुल्यतापत्तेः। चक्षुरादेस्त्वन्वयव्यतिरेकादिनैव प्रमाजनकत्वमवधार्यत इति न शब्दप्रामाण्याधीनं प्रामाण्यमिति शब्दोपजीव्यतिरिक्ततया तज्जन्यप्रमितिविषयार्थकतया लौकिकवाक्यस्य न तत्रातिव्याप्तिः। एतेन 'स्वजन्यज्ञानान्यूनविषयशब्दजन्यवाक्यार्थज्ञानसापेक्षत्वरूपशाब्दोपजीवित्वस्य चक्षुरादावभावेन चक्षुरादिजन्यप्रमितिविषयार्थके लौकिकवाक्येऽतिव्याप्त्यभावेन प्रमाणपदस्य तथा विवक्षा न युक्ता। न च प्रमाणपदस्योक्तविवक्षापक्षे शब्दोपजीविपदं यथाश्रुतमेव, चैत्रवाक्याप्रामाण्येऽपि चैत्रवाक्यादमुमर्थं जानामीति वाक्यस्य भ्रमप्रमासाधारणचैत्रवाक्यार्थज्ञानबोधकस्य प्रामाण्यसम्भवेन प्रामाण्यार्थं[1] तदनुपजीवनेनातिव्याप्त्यभावादिति वाच्यम्। तथापि चैत्रवाक्यादयमर्थः प्रमीयत[2] इति वाक्येऽतिव्याप्तेरपरिहारेण तादृशविवक्षाया आवश्यकत्वादि'ति नव्योक्तं[3] मपास्तम्। तादृशवाक्ये सत्यन्तसत्त्वेऽपि शब्दजन्यवाक्यार्थज्ञानाजन्यत्वरूपोत्तरदलाभावेन तत्रातिव्याप्त्यभावादित्याहुः।

१. 'त्वाद' क. पाठः. २. 'मित' ख. पाठः. ३. 'क्तमिदम' क. पाठः.

शब्दोपजीविपदस्य स्वजन्यज्ञानान्यूनविषयकेत्यादिविवक्षायां तु प्रथमप्रमाणपदं स्वरूपकीर्तनपरमिति दिक् ।

अदृष्टादिभिरपि तादृशैर्वेदार्थप्रमाजनना[1]दसम्भव इत्यत उक्तं द्वितीयप्रमाणपदम् । न चैवमपि मनसा वेदार्थप्रमाजननादसम्भव इति वाच्यम् । प्रमाणपदस्यासाधारणप्रमाणपरत्वाद्, वेदजन्यवाक्यार्थज्ञानजनने मनसः सहकारित्वेऽप्यसाधारणप्रमाणत्वाभावान्नासम्भवः । न चैवमहं[2] वेदार्थं जानामीत्यनुव्यवसाये मनस इन्द्रियत्वेनापि जनकतया साधारण्याभावाद् वेदस्य तादृशानुव्यवसायविषयार्थकत्वेनासम्भव इति वाच्यम् । तादृशानुव्यवसायजनने शब्दजन्यवाक्यार्थज्ञानसापेक्षत्वेन मनसः शब्दोपजीव्यतिरिक्तत्वाभावात्, तादृशानुव्यवसाये वेदार्थज्ञानस्यापि विषयतया वेदजन्यवाक्यार्थज्ञानातिरिक्तार्थविषयकत्वेन विवक्षणीयप्रमितित्वाभावाच्च, तादृशानुव्यवसायविषयार्थकत्वेऽपि वेदस्य नासम्भवः । प्रमितिपदं च स्वजन्यज्ञानानतिरिक्तविषयकज्ञानपरम् । तेन प्रमेयत्वसामान्यप्रत्यासत्तिजन्यप्रमितिविषयतया योगजधर्मसहकृतमनोजन्यप्रमितिविषयतया च वेदार्थस्य नासम्भवः । तादृशप्रमित्योर्वेदजन्यज्ञानातिरिक्तविषयै[3]कतया तादृशप्रमितिविषयार्थकत्वेऽपि विवक्षितप्रमित्यविषयार्थकत्वे[4]सत्त्वात् । न चैवमप्यप्रसिद्धिः, वेदजन्यज्ञानानतिरिक्तविषयै[5]कज्ञानस्य शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणाजन्यत्वादि-

१. 'नस' ख. पाठः.   २. 'पि' ख. पाठः.   ३. 'यत' ख. पाठः.
४. 'त्वात्' ख. पाठः.   ५. 'यज्ञा' क. पाठः.

ति वाच्यम्। तादृशप्रमाणजन्यस्वजन्यज्ञानानतिरिक्तार्थविषयकज्ञानविषयार्थकं लौकिकवाक्यजातं प्रसिद्धं, तदन्यत्वे सतीत्यर्थात्। यदि च देवताप्रसादादिना कस्यचिद् वेदार्थमात्रविषयकं ज्ञानं मनसा जन्यते, तदा तद्विषयार्थकत्वमादायासम्भववारणाय द्वितीयप्रमाणपदं मनोऽव्यतिरिक्तप्रमाणपरं बोध्यम्। अर्थपदं च तात्पर्यविषयीभूतार्थपरम्। तेन दृष्टार्थवेदभागे नाव्याप्तिः, सहस्रशाखस्यापि वेदस्यापूर्व एव तात्पर्यात्। सत्यन्तमदृष्टार्थकस्मृतावतिव्याप्तम्। अत उक्तं शब्दजन्येत्यादि।

ननु जन्यज्ञानाजन्यप्रमाणशब्दत्वमित्येतावतैव स्मृत्यतिव्याप्तिनिरासेन शब्दपदं व्यर्थम्। न चैवमजन्यज्ञानाप्रसिद्ध्या परमते जन्यपदव्यावर्त्याप्रसिद्ध्यापत्तिरिति वाच्यम्। अस्य पौरुषेयत्वानुमाने पक्षतावच्छेदकनिर्वचनत्वेन तत्रोपरञ्जकस्यापि जन्यपदस्य दानाविरोधात्। अतः शब्दपदमनर्थकमिति चेद्, न। नञ्व्यत्यासेन शब्दाजन्यवाक्यार्थज्ञानजन्यत्वमुत्तरखण्डार्थ इति वक्ष्यते। तत्र शब्दपदाभावे परस्याजन्यज्ञानाप्रसिद्धेः शब्दपदावैयर्थ्यात्। वाक्यार्थपदं तूपरञ्जकमात्रम्। अयोग्यशब्दे तादृशप्रमाणजन्यप्रमित्याविषयार्थकत्वेन सत्यन्तस्यापि सत्त्वादतिव्याप्तिवारणाय चरमप्रमाणपदम्। वेदार्थानुमापकलिङ्गपरामर्शेऽतिव्याप्तिवारणाय चरमशब्दपदम्। न च स्वर्गो यागजन्य इत्यनुमानस्य शब्दजन्यवाक्यार्थज्ञानजन्यत्वेन तत्र

---

१. 'थेवि' क. पाठः.

नातिव्याप्तिरिति वाच्यम्। तथापि सुखदुःखादिकं विचित्रकारणजन्यं विचित्रकार्यत्वादित्यनुमाने परिशेषाद् धर्माधर्मसाधकेऽतिव्याप्तिवारणाय शब्दपदावश्यम्भावात्। नन्वेवमप्यर्थज्ञानवदध्यापकोच्चारितवेदेऽव्याप्तिः, तस्य शब्दजन्यवाक्यार्थज्ञानजन्यत्वात्। न च तादृशशब्दजातीयत्वं विवक्षितं, साजात्यं चानुपूर्व्येति नातिप्रसङ्ग इति वाच्यम्। तथापि व्युत्क्रमेण शुकोच्चारिते वेदवाक्येऽतिव्याप्तिः। न च नञ्व्यत्यासेन शब्दाजन्यवाक्यार्थज्ञानजन्यत्वं विवक्षितमिति वाच्यम्। शुकवाक्यस्यापि परमेश्वरतादृशवाक्यार्थज्ञानजन्यतयातिव्याप्तितादवस्थ्यादिति चेद्, न। शब्दाजन्यवाक्यार्थज्ञानवत्कण्ठताल्वाद्युच्चारि[1]तप्रमाणजातीयत्वस्य विवक्षितत्वात्। एवञ्च शब्दाजन्यवाक्यार्थज्ञानं यद्यपि भगवतोऽस्ति, तथापि शुकेन व्युत्क्रमोच्चा[2]रितं[3] वेदवाक्यं[4] न तादृशवाक्यार्थज्ञानवद्भगवत्कण्ठताल्वाद्युच्चा[5]रितम्। यद्यपि[6] शुकस्य कण्ठताल्वादिनोच्चारितं, तथापि न शुकस्य वाक्यार्थज्ञानवत्त्वमिति न तत्रातिव्याप्तिः। वेदसमानानुपूर्वीकं तु वेदवाक्यं सङ्ग्राह्यमेव। लीलापरिगृहीतविग्रहतादृशवाक्यार्थज्ञानवद्भगवत्कण्ठताल्वाद्युच्चारितसमानानुपूर्वीकत्वात्। अत एव पठ्यमानवेदेऽपि नाव्याप्तिः। स्मृतावतिव्याप्तिवारणाय शब्दाजन्येति। यदि चैवमपि देवताप्रसादलब्धवेदार्थज्ञानवत्प्रणीतस्मृ-

१. 'च' ख. पाठः. २. 'च्च' ख. पाठः. ३. 'त' क. पाठः. ४. 'क्यं ता' क. पाठः. ५. 'च्च' ख. पाठः. ६. 'द्युच्च' क. पाठः. ७. 'वत्क' क. पाठः.

तावतिव्याप्तिः, तदा देवताप्रसादाजन्यत्वेनापि वाक्यार्थज्ञानं विशेषणीयम्। यदि च वेदातिरिक्तमपि भगवत्कृतं सङ्केतग्राहकमङ्गीक्रियते, तदा तदन्यत्वेनापि विशेषणीयम्।

वस्तुतस्तु पक्षतावच्छेदकातिप्रसक्तिर्न दोषाय, सङ्केतग्राहकवाक्यस्यापि पक्षत्वेंऽशतः सिद्धसाधनाद्यनवकाशात्। न च वाक्यमात्रं पक्षीक्रियताम्। मणिकृन्मतेंऽशतः सिद्धसाधनत्वस्यादोषत्वादिति वाच्यम्। सम्प्रदायमतेनैतदनुमानस्योक्तत्वादिति दिक्।

नन्वेवमपि वाक्यत्वहेतोर्लाघवादुच्चारितत्वमात्रं व्यापकं, न तु स्वतन्त्रपुरुषोच्चारितत्वम्। ततश्चाध्यापकोच्चारणमूलकत्वमेव सिध्यति। न तु भगवदुच्चारितत्वमिति कथं भगवत्सिद्धिरिति चेद्, न। लौकिकवाक्यजन्यज्ञाने कदाचिदनाश्वासः, वेदवाक्यजन्यज्ञाने तु न कदाप्यनाश्वास इत्युभयसिद्धम्। तच्च लौकिकवाक्याद् वेदवाक्यस्य किञ्चिद्वैलक्षण्यं विना न संभवति। तच्च वैलक्षण्यं नित्यत्वेन, दोषाजन्यतया, नित्यज्ञानवत्प्रणीततया वा वाच्यम्। तत्राद्यः पक्षो न सम्भवति, वर्णानामनित्यत्वप्रतिपादनात्। अतः सजातीयोच्चारणानपेक्षनित्यज्ञानवदुच्चारितत्वेनैव वेदानां तज्जन्यज्ञाने न कदाप्यनाश्वास इत्युपेयमिति सर्वज्ञभगवत्सिद्धिरप्रत्यूहा। न च मन्वादिस्मृतिष्विव नित्यज्ञानवदजन्यत्वेऽपि वेदेष्वाश्वासः किं न स्यादिति वाच्यम्। मन्वादिष्वपि सर्वज्ञभगवत्प्रणीतवेदमूलकत्वनिश्चयादेव। अत

१. 'दाद्यज' ख. पाठः. २. 'तादिग्रा' ख. पाठः. ३. 'ग्रहवा' क. पाठः. ४. 'त्राश्वा' ख. पाठः. ५. 'वक्तव्यम्' ख. पाठः. ६. 'त्वापा' क. पाठः.

एवाधुनिकसङ्ग्रहालिखितेषु केषुचिद् वाक्येषु श्रुतिमूलकत्वानि-श्चयात् कदाचिदनाश्वासः । तस्माद् भगवत्प्रणीतश्रुतिमूलकत-यैव स्मृतिष्वाश्वास इति नित्यज्ञानाश्रयो भगवानङ्गीकार्य इति दिक् ॥

इति वेदपौरुषेयत्ववादः ।

## अथोच्छिन्नशाखावादः ।

एवं स्मृतेर्वेदमूलतयैव प्रामाण्यमित्युक्तम् । तत्र कासा-श्चित् स्मृतीनां मूलभूता श्रुतिः प्रत्यक्षतो नोपलभ्यते । सा किं श्रुतिर्नित्यानुमेया, किं वा स्मृतिप्रणयनकाले प्रत्यक्षा सतीदानी-मुच्छिन्नेति विवादे प्राभाकराः—काण्वमाध्यन्दिनतैत्तिरीयादि-भेदेनानेकासु शाखासु तत्तदध्यापकपरम्परया स्वरमात्रेणापि भ्रेषरहिततया प्रतायमानासु कासाञ्चिच्छाखानां स्वरूपत एवो-च्छेदोक्तिरयुक्ता । ततश्च प्रत्यक्षवेदमूलकत्वेन वेदामूलकत्वेन चोभयसिद्धस्मृतिभिन्ना स्मृतिर्वेदमूला, अदृष्टार्थकस्मृतित्वात्, प्रत्यक्षवेदमूलकस्मृतिवदित्यनुमानेन वेदमूलकत्वं सिध्यद् विद्य-मानस्यैव वेदस्य स्वार्थानुभवजननद्वारा मूलत्वं स(म्भ?-म्भा)व(य)ति, न तूच्छिन्नस्येति परिशेषान्नित्यानुमेयवेदमूलक-त्वमादायैव सिध्यति । अत्र च 'वैसर्जनीयं वासोऽध्वर्यवे (द)-

---

१. 'द' क. पाठः.

दाती'त्यादिलोभमूलकस्मृतौ बाधवारणाय वेदामूलकत्वेनेत्यादि। अंशतः सिद्धसाधनवारणाय प्रत्यक्षवेदमूलकभिन्नत्वविशेषणम्। एवं नित्यानुमेयवेदसिद्धौ तस्य त्वदभिमतेश्वरकर्तृकत्वासम्भवाद् वेदान्तरस्यापि तद्वन्न तत्कर्तृकत्वमिति वेदकर्तृतया नेश्वरसिद्धिः। नन्वानुपूर्वीविशेषविशिष्टतया ज्ञातस्यैव पदस्य स्वार्थोपस्थितिद्वारानुभावकत्वम्। अन्यथा नदी दीनेत्यादावर्थविशेषप्रतीतिर्न स्यात्। अतो नित्यानुमेयत्वे वेदस्य कथं ततोऽर्थविशेषप्रतीतिः, आनुपूर्व्या ज्ञातुमशक्यत्वादिति चेद्, न। घटकलशादिपदानां घटान्वयानुभावकत्वं न घटकलशादिपदत्वेन। अननुगतत्वात्। किन्तु तदर्थज्ञापकत्वेन ज्ञाततया, अनुगतत्वात् सामान्यत्वाच्च। अत एव किमृषभपदं वृषभपदं वानेनोच्चारितमिति सन्देहेऽपि पुंगवरूपार्थज्ञापकं पदमनेनोच्चारितमिति निश्चयादन्वयधीः। न चैवमानुपूर्वीज्ञानस्यानुपयोग इति वाच्यम्। तस्यापि[2] तदर्थज्ञापकत्वज्ञान एवोपयोगात्। न केवलं शाब्दस्थले तदर्थज्ञापकत्वज्ञानादर्थधीः, अपि तु ज्ञायमानकरण[3]मात्रे। अत एवालोकत्वधूमत्वसंशयेऽपि वह्निव्याप्यत्वज्ञानादनुमितिः। न चैवं कदाप्यनुच्चारितस्य कथं वाक्यत्वमिति वाच्यम्। मौनिश्लोकवदनुच्चारणेऽपि वाक्यत्वोपपत्तेरित्याहुः।

अत्रोच्यते—तदर्थज्ञापकत्वज्ञानादन्वयानुभवे घटमानयेत्यत्रेव घटः कर्मत्वमित्यत्राप्यन्वयधीः स्यात्। अतो विभक्त्यादिसमभिव्याहृतपदत्वेनैवानुभावकत्वमिति न नित्यानुमेयादर्थधीरिति न तस्य स्मृतिमूलत्वसंभव इति स्मृतिप्रणयनकाले

१. 'स्यार्थो' क. पाठः. २. 'स्य त' ख. पाठः. ३. 'का' ख. पाठः.

पठ्यमानादेव वेदादर्थं प्रतीत्य स्मृतिप्रणयनमिति वाच्यम्। स चेदानीमनुपलम्भादुच्छिन्न इत्यवसीयते। ननु विभक्त्यादिसमभिव्याहृततत्तत्पदत्वस्याननुगततया विशेषतया च नानुभवजनकतावच्छेदकत्वं, किन्त्वन्वयधीविरोधिपदान्यपदत्वमेवानुगतत्वात् सामान्यत्वाच्चानुभवजनकतावच्छेदकम्। तच्च नित्यानुमेयवेदेऽप्यक्षतमिति चेद्, न। घटः कर्मत्वमित्यादावप्यभेदान्वयबोधसंभवेन[1] तत्तदन्वयधीविरोधिपदान्यपदत्वमेव तथेति त्वयापि वाच्यमित्यननुगमस्तुल्यः। पदानां तत्तदन्वयधीविरोधित्वं[2] च विभक्तिविशेषाद्यसमभिव्याहारादेवावसेयमिति लाघवाद् विभक्त्यादिसमभिव्याहृतपदत्वेनैवानुभावकत्वम्। यदि च विभक्त्यादिसमभिव्याहारो नानुभवजनकतावच्छेदकः, सहकारिणोऽवच्छेदकत्वे दण्डादिसहकृतचक्रत्वादिनैव कारणत्वमित्येककारणपरिशेषापत्तिरिति मतं, तर्हि घटः कर्मत्वमित्यत्रेव विभक्त्यादिसमभिव्याहाररूपसहकार्यभावान्न नित्यानुमेयवेदादर्थधीरिति न तस्य स्मृतिमूलत्वम्। प्रयोगश्च — विवादाध्यासितस्मृत्यनुमितो वेदोऽध्ययनाविषयो वेदत्वात् प्रत्यक्षवेदवदिति दिक्।

यत्तु सहस्रशाखाध्यायिषु व्यासादिषु जाग्रत्सूच्छेदकथनमयुक्तम्, अतो विप्रकीर्णतैव तस्य वेदस्य युक्तेति भट्टमतं[3], तत् तथैव। भरतखण्डेऽध्ययनाभावनिश्चयादुच्छिन्नत्ववाचोयुक्तिरिति दिक्।

---

१. 'यसं' क. पाठः. २. 'यवि' क. पाठः. ३. 'तम्। तथै' क. पाठः.

नन्वेवमपि मन्वादिभिरेव तपोविशेषलब्धसार्वज्ञ्यैः स्मृतिः प्रणीतेति तत्र समाश्वाससम्भवात् कृतं स्मृतिमूलभूतवेदवक्तृतया भगवत्कल्पनयेति चेद् , न । प्रतिप्रलयमनेकसर्वज्ञकल्पनादेकस्यैव सर्वज्ञस्य सर्वकालानुयायिनः कल्पना ज्यायसीति दिक् ॥

इत्युच्छिन्नशाखावादः।

## अथ प्रलयवादः ।

ननु प्रलये मानाभावान्नानेकसर्वज्ञकल्पनमिति चेद्, न। यद्येक एव सर्वज्ञः कश्चित् कल्प्यते, तर्हि[1] स एवास्मदभिमत ईश्वर इत्यवेहि । वस्तुतस्तु[2] प्रलये मानाभावोऽसिद्धः[3] । घटप्रागभावः कार्यद्रव्यानाधारवृत्तिः अभावत्वात् सुखादिप्रागभाववद् इत्यनुमानस्यैव तत्र मानत्वात् । अत्र प्रागभावमात्रस्य पक्षत्वे शब्दादिप्रागभावेंऽशतः सिद्धसाधनं स्यात् । अतो घटेति । घटाभावमात्रस्य पक्षत्वे घटात्यन्ताभावस्याकाशादिवृत्तित्वादंशतः सिद्धसाधनम् । अतः प्रागिति । न चैवमप्याकाशवृत्तितयार्थान्तरमिति वाच्यम् । घटप्रागभावस्य कालकपालान्यतरवृत्तेर्बाधादेवार्थान्तरा[4]भावात् । साध्ये च प्रलयकालस्यापि नित्यद्रव्याधिकरणतयोद्देश्यासिद्धिवारणाय कार्यपदम् । दृष्टान्ते साध्यसिद्धये द्रव्यपदम् । न चैवमपि कपालेऽपि कदाचित् कार्य-

---

१. 'क' क. पाठः. २. 'स्तु न प्र' क. पाठः. ३. 'वः । घ' क. पाठः. ४, 'रबाधात्' क. पाठः.

द्रव्याधिकरणत्वाभावसत्त्वात् कपालवृत्तितयार्थान्तरमिति वाच्यम् । कार्यद्रव्याधिकरणभिन्नवृत्तित्वस्यैव साध्यत्वात् । अन्योन्याभावस्य चाव्याप्यवृत्तित्वाभावेन कपालस्य कार्यद्रव्याधिकरणप्रतियोगिकान्योन्याभाववत्त्वाभावात् । न चैवमप्यन्यब्रह्माण्डवर्तिकार्यद्रव्याधिकरणतया सिषाधयिषितकालस्यापि बाध इति वाच्यम् । कार्यपदस्यैतद्ब्रह्माण्डवर्तिकार्यपरत्वात् । न च कालस्यापि कार्यद्रव्याधिकरणतया तद्भिन्नत्वाभावाद् बाध इति वाच्यम् । सिषाधयिषितखण्डप्रलयात्मककालोपाधेः कार्यद्रव्यानधिकरणतया तद्भिन्नत्वेन बाधाभावात् । नन्वभावत्वहेतोः कार्यद्रव्यानधिकरणप्रलयकालादिप्रतियोगिकान्योन्याभावे व्यभिचारः, अन्योन्याभावस्य प्रतियोगितावच्छेदकेन विरोधात् कार्यद्रव्यानधिकरणत्ववति प्रलयादाववृत्तेरिति चेद्, न । प्रलयकालः कार्यद्रव्यानधिकरणभिन्न इति प्रतीत्यभावेन देशतया तस्य तादृशान्योन्याभावानधिकरणत्वेऽपि प्रलयेऽपि कार्यद्रव्यानधिकरणान्योन्याभाव इति प्रतीतेः कालतया तदधिकरणत्वाविरोधात् । अन्यथा प्रलये तादृशान्योन्याभावाभावे तस्य नित्यत्वानापत्तेरिति दिक् ।

एवं श्रुत्यादिकमपि प्रलयसद्भावे प्रमाणमुदाहर्तव्यम् । तस्मात् प्रतिप्रलयमनन्तसर्वज्ञकल्पनाद् वरमेक एव नित्यः सर्वज्ञो वेदवक्तेति कल्पनमिति स एव वक्तास्माकमीश्वर इत्य-

---

१. 'ष्येतद्ब्रह्माण्डव्यतिरिक्तब्र' ख. पाठः. २. 'र्यान' ख. पाठः. ३. 'कर्तेति' ख. पाठः. ४. 'नं युक्तमि' ख. पाठः. ५. 'व वेदव' ख. पाठः.

नवद्यमिति ॥

इति प्रलयवादः ।

---

## अथ विधिवादः ।

अयं च वेदः प्रवर्तकज्ञानजननद्वारा यागादिषु प्रवर्तक इति प्रवर्तकं ज्ञानं निरूप्यते । तत्र भाट्टाः—'यजेत स्वर्गकाम' इत्यादौ लिङादेर्यद्यप्याख्यातत्वेन स्वर्गादिभाव्यका यागादिकरणिका प्रयाजादीतिकर्तव्यताकार्थभावना वाच्या । तथापि शब्दभावनाभिधादिपदाभिधेया प्रवर्तनापि वाच्या । तदाहुः—

"अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥"

इति । लिङादय एवाभिधाख्यां भावनां प्रवर्तनामभिदधते । अर्थात्मा अर्थः प्रयोजनं तदाप्नोतीत्यर्थात्मा । स्वर्गादिभाव्यकेति यावत् । तादृशी भावना तु सर्वाख्यातवाच्येत्यर्थः । तस्याश्च शब्दभावनायाः पुरुषप्रवृत्तिर्भाव्या । शक्तिग्रहः करणम् । तदभावे प्रवर्तनाज्ञानस्यैवानुदयेन प्रवृत्त्यसिद्धेः । अर्थवादस्त्वितिकर्तव्यता, प्ररोचनां विनालसानां प्रवृत्त्यसम्भवात् । तदाहुः—

"लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः ।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥"

---

१. 'भ' क. पाठः.

इति। प्ररोचना स्तुत्यर्थवादः। तादृशप्रवर्तना विध्यर्थः। तज्ज्ञानं च प्रवृत्तिहेतुः। न च तस्यां प्रमाणाभाव इति वाच्यम्। लिङा-दयः स्वनिष्ठव्यापारद्वारकाः, व्यापारभिन्नत्वे सति परनिष्ठव्या-पारजनकत्वात्, चक्रादिभ्रमिजनकदण्डादिवदित्यनुमानस्यैव तत्र प्रमाणत्वात्। अत्र चक्रनिष्ठभ्रमिजनकदण्डभ्रमौ व्यभि-चारवारणाय व्यापारभिन्नत्व इति। स्वनिष्ठभ्रमिजनके दण्डे त-द्वारणाय परनिष्ठेति। तस्माल्लिङादौ पुरुषप्रवृत्त्यनुकूलः प्रवर्त-नाख्यो व्यापारोऽङ्गीकार्यः, तज्ज्ञानं च प्रवर्तकमित्याहुः। तद-युक्तम्। एवं सति चैत्यं वन्देतेत्यत्रापि तादृशप्रवर्तनाज्ञानस-म्भवात् प्रवृत्त्यापत्तिः। न च तत्र यजेतेत्यत्रेव स्वभाव्यपुरुषप्र-वृत्तेरिष्टसाधनत्वाभावेन[1] परम्परयापीष्टसाधनत्वज्ञानाभावान्न प्र-वृत्तिरिति वाच्यम्। तस्यावश्यकत्वादिष्टसाधनताज्ञानमेव प्रवर्त-कमस्तु। किञ्चोक्तानुमाने[2] स्वनिष्ठपदं व्यर्थम्। न च व्यापके न व्यर्थतेति वाच्यम्। हेताविव व्याप्तिग्रहानुपयोगरूपबीज-साम्यात्। तस्मादिष्टसाधनताज्ञानद्वारतयैव लिङादेः प्रवर्तकत्व-मिति प्रवर्तनायामेव न प्रमाणमिति दिक्।

नन्वस्तु तर्ह्यर्थभावनारूपकृतिगतेष्टसाधनताज्ञानमेव प्रवर्तकम्[3]। अस्तु तादृशेष्टसाधनत्वं च विध्यर्थः। न च विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेः प्रत्ययार्थभूतमिष्ट-साधनत्वं प्रकृत्यर्थयागान्वितमेव प्रतीयेत, न तु प्रत्ययार्थकृ-

---

१. 'त्तेरपीष्ट' ख. पाठः. २. 'ने नि' क. पाठः. ३. 'म् । ता' ख. पाठः.

त्यन्वितमिति वाच्यम् । तं(स्या? ह्या)ख्यातार्थस्य वर्तमानत्वादे-
र्देवदत्तो गच्छतीत्यादावपि कृत्यन्वयो न स्यात् । यदि च बाध-
काभावे सति विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकता, तर्ह्येकपदो-
पात्तत्व[2]प्रत्यासत्त्यपेक्षयैकप्रत्ययोपात्तत्वप्रत्यासत्तेर्बलीयस्त्वेनेष्टसा-
धनत्वस्य कृत्यन्वयस्यैवौचित्यात् । न च लोके पाकादिगतक्रि-
येष्टसाधनताज्ञानं विना पाकादिकृतिगतेष्टसाधनताज्ञानं नेति
तत्र प्राथमिकक्रियेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धेर्न कृतीष्टसा-
धनताज्ञानस्य प्रवर्तकत्वकल्पनमि[3]ति वेदेऽपि न कृतीष्टसाधन-
ताज्ञानं प्रवर्तकमिति वाच्यम् । तथापि विधिनानन्तरङ्गप्रत्यास-
त्त्या कृतीष्टसाधनत्वे बोधिते तावता प्रवृत्तिसिद्धेः पश्चात् कृ-
तीष्टसाधनत्वोपपादकतया कल्पितमपि क्रियेष्टसाधनत्वं न प्रवृ-
त्तिहेतुरिति लोके क्रियेष्टसाधनताज्ञानस्य प्रवर्तकत्वेऽपि वेदे
कृतीष्टसाधनताज्ञानमेव प्रवर्तकमिति चेद्, न । लोकवेदयोर-
नुगतसम्भवेनाननुगतकल्पनमयुक्तम् । ततश्च कृतीष्टसाधनता-
ज्ञानस्यैव प्रवर्तकत्वे भावियौवराज्यादावपि प्रवृत्तिः स्यात् । त-
द्विषयकृतेरिष्टसाधनत्वज्ञानात् । न चेदानीन्तनकृतिसाध्यताज्ञा-
नमपि प्रवर्तकमिति कल्प्यत इति वाच्यम् । कारणद्वयकल्पना-
गौरवादिष्टसाधनत्वविषयककृतिसाध्यताज्ञानमेव सर्वत्र प्रवर्तक-
मिति कल्पनीयमिति कृतौ कृतिसाध्यताज्ञाना[4]सम्भवात् क्रि-
याविषयकेष्टसाधनत्वविषयककृतिसाध्यताज्ञानमेव प्रवर्तकमिति
दिक् ।

---

१. 'तथाचाख्या' क. पाठः. २. 'त्तम' क. पाठः. ३. 'ति वा' क. पाठः. ४. 'नाभा' क. पाठः.

प्राभाकरास्तु—पाकं कृत्या साधया[1]नीतीच्छया प्रवर्तत इत्यविवादम् । सा चेच्छा कृतिसाध्यत्वप्रकारिका क्रियाविषयिणीति कृतिसाध्यत्वप्रकारकक्रियाविषयकज्ञानसाध्या वाच्या, इच्छायाः स्वसमानप्रकारकज्ञानसाध्यत्वनियमात् । ततश्च कृतिसाध्यता[2]प्रकारकं ज्ञानं कृतिसाध्यत्वप्रकारकचिकीर्षाद्वारा कृतौ प्रवृत्तौ हेतुः । ननु कृतिसाध्यत्वप्रकारकेच्छापेक्षया कृतीच्छैव लाघवात् प्रवृत्तिहेतुः, कृतीच्छा च कृतीष्टसाधनताज्ञानादिति कृतीष्टसाधनताज्ञानमेव प्रवर्तकम् । न चैवं भिन्नविषयिण्याः कृतीच्छायाः पाके प्रवर्तकत्वे ततः पाक इवान्यत्रापि प्रवृत्त्यापत्तिः । अतः समानविषयिण्याः कृतिसाध्यत्वप्रकारिकायाः पाकचिकीर्षाया एव पाके प्रवर्तकत्वं वाच्यमिति कृतिसाध्यताज्ञा[3]नस्य हेतुत्वसिद्धिरिति वाच्यम् । पाकगोचरकृतीच्छाया अपि पाकविषय[4]कत्वेन समानविषयकत्वाविरोधात् समानविशेष्यकत्वस्य गौरवेणातन्त्रत्वात् । अतो लाघवात् कृतीच्छैव प्रवर्तिकेति तद्धेतुभूतं कृतीष्टसाधनताज्ञानमेव प्रवर्तकमिति चेद्, न । पाकजनककृतीच्छाया इव कृतिविषयत्वप्रकारकपाकेच्छाया अपि हेतुत्वमस्तु । विनिगमनाविरहात् तावतापि कृतिसाध्यताज्ञानस्य हेतुत्वमक्षतमेव । किञ्च, कृत्यसाध्यताज्ञानं प्रतिबन्धकमित्यविवादम् । तदभावस्य हेतुत्वकल्पने गौरवात् कृतिसाध्यताज्ञानमेव हेतुः ।

१. 'च्छा' क. पाठः. २. 'ताज्ञा' क. पाठः. ३. 'नहे' ख. पाठः. ४ 'यत्वे' क. पाठः.

नन्वेवं कृतिसाध्यताज्ञानस्य प्रवर्तकत्वे जीवनादृष्टजन्यकृतिसाध्यताज्ञानात् प्राणादिसञ्चाराय प्राणादौ प्रवृत्त्यापत्तिः। न च जीवनादृष्टादेव प्राणसञ्चारोपपत्तेः जीवनयोनिकृतावेव न मानमिति वाच्यम्। धावतः पुरुषस्य यत्नोत्कर्षेण श्वासोत्कर्षदर्शनेन प्राणसञ्चारमात्रे यत्नस्य हेतुत्वसिद्धौ सुषुप्तिकालीनप्राणसञ्चारे यत्नान्तरासम्भवाज्जीवनयोनियत्नसिद्धेः। न चैवमपि प्राणादेरयोग्यत्वान्न कृतिविषयत्वमिति वाच्यम्। रेचकादिना श्वाससञ्चारानुकूलकृतेः प्राणादावनुभवसिद्धतया तस्य कृत्यवि[1]षयत्वाभावात्। तस्मात् कृतिसाध्यताज्ञानस्य प्रवर्तकत्वे प्राणादौ प्रवृत्त्यापत्तिरिति चेद्, न। चिकीर्षाधीनकृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वाङ्गीकारात्। जीवनयोनिकृतेश्च चिकीर्षाधीनत्वाभावान्न प्राणादौ प्रवृत्त्यापत्तिः। न चैवमपि कृतिसाध्यताज्ञानं गमनादिनान्तरीयके श्रमेऽस्तीति तत्रापि प्रवृत्त्यापत्तिरिति वाच्यम्। तथापि श्रमस्य दुःखतया तत्र चिकीर्षानुदयाद् द्वाराभावेन कृत्यसम्भवात्। यत्र तु मल्लादीनां श्रमेऽपीष्टसाधनताज्ञानं तत्र चिकीर्षायां बाधकाभावात् प्रवृत्त्यापादनमिष्टमेव।

नन्वेवमपि कृतिसाध्यताज्ञानादनिष्टसाधनतया ज्ञातेऽपि प्रवृत्त्यापत्तिरिति चेद्, न। इष्टसाधनतालिङ्ग[2]ककार्यताज्ञानस्य प्रवर्तकत्वाङ्गीकारात्। न चैवं निष्फले सन्ध्यावन्दनादौ प्रवृत्तिर्न स्यात्, तत्रेष्टसाधनतालिङ्गककार्यताज्ञान[3]स्याभावादिति वाच्यम्। नित्यस्थले वेदाधीनकार्यताज्ञानस्यैव प्रवर्तकत्वस्वीका-

१. 'योग्यत्वा' ख. पाठः. २. 'ङ्गका' क. पाठः. ३. 'नाभा' ख. पाठः.

रात् । न चैवमननुगम इति वाच्यम् । प्रवृत्तिमात्रे कार्यताज्ञानं सामान्यसामग्री । काम्यस्थले काम्यसाधनतालिङ्ग[1]ककार्यताज्ञानं नित्यस्थले[2] च वेदाधीनकार्यताज्ञानं[3] च विशेषसामग्री । न चैवमप्यन्यकृतिसाध्यताज्ञानात् प्रवृत्त्यापत्तिः[4] । यदि च स्वकृतिसाध्यताज्ञानमेव, तथापि भावियौवराज्यादौ प्रवृत्तिः स्यादिति वाच्यम् । इदानीन्तनमत्कृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वात् ।

नन्वेवमपि मधुविषसम्पृक्तान्नभोजने सञ्ज्ञातबाधस्यापि प्रवृत्त्यापत्तिः, तस्यापि तृप्तिरूपसुखसाधनत्वेनेष्टसाधनतालिङ्गककार्यताज्ञानविषयत्वात् । न च तत्रानिष्टसाधनताज्ञानेन कृत्यनुत्पादात् कृतिसाध्यताज्ञानमेव नेति वाच्यम् । कृतिसाध्यताज्ञानं हि यदीदानीं मया क्रियेत, तदोत्पद्येतेत्येवमाकारकम्[5] । तादृशस्य च कृत्यनुत्पादेऽपि सम्भवात् । अतः सञ्ज्ञातबाधस्यापि तत्र प्रवृत्तिप्रसङ्ग इति चेद्, न । बलवदनिष्टाननुबन्धीष्टसाधनतालिङ्गककार्यताज्ञानस्यैव विशेषसामग्रीत्वात् ।

नन्वेवमिष्टसाधनताज्ञानमेव प्रवर्तकमङ्गीक्रियताम् । कृतं सामग्रीद्वयकल्पनेनेति चेद्, नित्यस्थले फलाभावेनोक्तस्यैवादर्तव्यत्वात् । नन्वेवमपि कृत्यनन्तरभविष्यत्तारूपकृतिसा-

---

१. 'ङ्गका' क. पाठः. २. 'ले वे' क. पाठः. ३. 'नं वि' ख. पाठः. ४. 'त्तिरिति वाच्यम् । य' क. पाठः. ५. 'त्पा' क. पाठः.

ध्यता पाकस्यासिद्धतादशायां दुर्ज्ञेया । सिद्धतादशायां तु सिद्धे कृत्यनुत्पादाद् उत्पन्नमपि कृतिसाध्यताज्ञानमकिञ्चित्करमिति चेद्, न। पाको मत्कृतिसाध्यः मत्कृतिमन्तरेणासत्त्वे सति मदिष्टसाधनत्वादित्यनुमानादसिद्ध एव पाके कृतिसाध्यताज्ञानसंभवात् ।

नन्वेवं प्राणपञ्चकसञ्चारस्थलसाधारणं श्रमसाधारणं च कृतिसाध्यताज्ञानमात्रं न प्रवर्तकमिति स्वेच्छाधीनकृतिसाध्यत्वं साध्यम् । तावन्मात्रमपि भावियौवराज्यादौ न प्रवर्तकमिति स्वेच्छाधीनेदानीन्तनमत्कृतिसाध्यत्वं साध्यम् । ततश्च प्राणपञ्चकसञ्चारे भावियौवराज्यादौ च हेतोर्व्यभिचारः । तत्र मत्कृतिमन्तरेणासत्त्वे सति मदिष्टसाधनत्वरूपहेतोः सत्त्वात् स्वेच्छाधीनेदानीन्तनमत्कृतिसाध्यत्वरूपसाध्याभावाच्चेति चेद्, न। हेतावपि चिकीर्षाधीनेदानीन्तनमत्कृतिमन्तरेणेति विवक्षितत्वात् ।

नन्वेवमप्यानुषङ्गिक ओदनादिमध्यगतमत्स्यादिभोजने विवक्षितहेतुमति स्वेच्छाधीनकृतिसाध्यताविरहाद् व्यभिचारः। न च हेतावपि स्वचिकीर्षाधीनमत्कृतिमन्तरेणेति विवक्षया तद्वारणमिति वाच्यम् । तथा सतीष्टसाधनत्वांशवैयर्थ्यापातात्, श्रमादौ स्वेच्छाधीनकृतिमन्तरेणासत्त्वे सतीति हेतोरभावेन व्यभिचाराभावात् । न च मास्तु तर्हीष्टसाधनत्वांश इति वा-

व्यम् । तथा सतीष्टसाधनतालिङ्गककार्यताज्ञानासम्भवेन काम्ये प्रवृत्तिर्न स्यादिति चेद्, न । अन्येच्छाधीनमत्कृतिसाध्यत्वे सति यन्मदिष्टसाधनं तदन्यत्वे सतीत्यपि विशेषणात् । एवञ्च श्रमस्याप्यन्येच्छाधीनमत्कृतिमन्तरेणासत्त्वे सति यन्मदिष्टसाधनं तदन्यत्वमस्तीति तत्र व्यभिचारवारणायेष्टसाधनत्वादिकम् । नन्वेवमपि यत्रोक्तहेतुमत्येव तदभाववत्त्वभ्रमस्तत्र स्वेच्छाधीनकृतिसाध्यत्वाभावाद् व्यभिचार इति चेद्, न । तादृशेष्टसाधनत्वेन ज्ञातत्वस्यैव लिङ्गत्वात् । वस्तुतस्तु व्यभिचारिणोऽप्यस्माल्लिङ्गाद् व्यभिचारास्फूर्तिदशायां कार्यतानुमित्या सर्वत्र प्रवृत्तिरिति पराभिमतत्वात् । नन्वेवमपि कालविशेषान्तर्भावेन व्याप्तिग्रहासम्भवात् कथमनुमानप्रवृत्तिरिति चेद्, न । सामान्यव्याप्तिज्ञानात् पूर्वानवगतोऽपि विशेषः सिध्यतीति मतेनैतदनुमानात् । नन्वेवं स्वर्गकामस्य मम यागविषयकं कार्यमिति कार्यताज्ञानात् प्राक् कथं याग इष्टसाधनताज्ञानम् । इष्टसाधनताज्ञानस्य तन्मते विध्यर्थत्वाभावाद् इति चेद्, न । यागस्य स्वर्गसाधनत्वाभावे स्वर्गकामकृतिविषयत्वान्वयायोग्यतया स्वर्गकामकृतिविषयत्वान्वयितावच्छेदकतया विध्यर्थत्वाभावेऽपीष्टसाधनत्वस्य घटेन जलमाहरेत्यत्र जलाहरणान्वयितावच्छेदकतया घटे छिद्रेतरत्वस्यैव प्रतीतौ पश्चाद् यागो मत्कृतिसाध्यः मत्कृतिमन्तरेणासति मदिष्टसाधनत्वादित्यनुमानसम्भ-

१. 'त्त्वे य' क. पाठः। २. 'ते' क. पाठः

वादिति पराभिमतत्वात्। नन्वेवमपि कृतः क्रियमाणो वा पाको न पक्षः। तत्रेदानीन्तनमत्कृतिसाध्यतासाधने बाधात्। नापि भावी पाकः, तस्याज्ञानादिति चेद्, अत्र मणिकृतः—सिद्धपाके पाकत्वं गृहीत्वा पाकत्वाश्रय इदानीन्तनमत्कृतिसाध्य इति साध्यमाने सिद्धे बाधादसिद्ध एव साध्यं सिध्यति। पक्षतावच्छेदकसामानाधिकरण्येन हेतुज्ञानस्यैवानुमित्यङ्गत्वादित्याहुः। नन्विदानीन्तनेच्छाविषयसाधनत्वघटितहेतोः सिद्धे बाधादसिद्धस्य चाज्ञानात् कथं पक्षधर्मताधीः, तदभावाच्च कथमनुमितिरिति चेद्, न। सिद्धपाकत्वेन बाधेऽपि पाकत्वेन सिद्धपाक एव हेतुज्ञानं नानुपपन्नम्। समानप्रकारकबाधज्ञानस्यैव तन्मते प्रतिबन्धकत्वे तन्त्रत्वात्। न चैवं साध्यमपि सिद्ध एव पाके पाकत्वेन सिध्येदिति वाच्यम्। उत्सर्गतः प्रमाणानामबाधितज्ञानजननस्वाभाव्यादसिद्ध एव पाके साध्यं सिध्येदित्याहुः। वस्तुतस्तु अयं पाकः पाकपूर्ववर्ती पाकत्वात् प्राक्तनपाकवदित्यनुमानादनागतपाकसिद्धौ तत्पक्षीकारेणोक्तसाध्यसाधने बाधकाभावादिति दिक्। बालस्य स्तन्यपानादाविष्टसाधनतालिङ्गककार्यतानुमानं च त्वन्मत इष्टसाधनतानुमितिवत् कार्यबलात् कल्पनीयम्। अतः कृतिसाध्यत्वमेव विध्यर्थः, तज्ज्ञानं च प्रवर्तकमित्याहुः।

अत्र तार्किकाः—यदुक्तं कृतिसाध्यताज्ञानं प्रवृत्तौ सामान्यसामग्री, काम्यप्रवृत्तौ बलवदनिष्टाननुबन्धीष्टसाधनतालिङ्गककार्यताज्ञानं नित्यप्रवृत्तौ वेदाधीनकार्यताज्ञानं च विशे-

षसामग्रीति । तदयुक्तम् । बलवदनिष्टाननुबन्धीष्टसाधनत्वविषयककार्यताज्ञानत्वेनैव सर्वत्र प्रवर्तकत्वोपपत्तौ प्रवृत्तिकारणताश्रयद्वयकल्पने गौरवात् । नित्यस्थलेऽपि यथेष्टसाधनताज्ञानस्य कारणत्वं तथा वक्ष्यते । किञ्च, वृष्टीच्छायां लाघवादुपायेच्छात्वावच्छेदेन साक्षादिष्टसाधनताज्ञानस्य हेतुत्वकल्पनादुपायचिकीर्षायामपीष्टसाधनताज्ञानं साक्षादेव हेतुः, न तु कृतिसाध्यतानुमित्युपक्षीणम् । अतः कृतिसाध्यताविषयकमिष्टसाधनताज्ञानमेव चिकीर्षाद्वारा प्रवर्तकम् । नन्वेवमुपायचिकीर्षायामुपायेच्छात्वेनेष्टसाधनाताज्ञानस्य हेतुत्वेऽप्युपायचिकीर्षात्वेनेष्टसाधनतालिङ्गकं कार्यताज्ञानमपि हेतुरिति तदप्युपायचिकीर्षाद्वारा प्रवर्तकमस्त्विति चेद्, न । उपायचिकीर्षात्वस्य कार्यतानवच्छेदकत्वात् । तथाहि — चिकीर्षात्वावच्छेदेन कृतिसाध्यताज्ञानमात्रमेव कारणं, न त्विष्टसाधनतालिङ्गककार्यताज्ञानं, भोगचिकीर्षायां तदभावात् । उपायेच्छायामिष्टसाधनताज्ञानं कारणम् । ततश्च सामान्यविशेषसामग्रीभ्यामेवोपायचिकीर्षोपपत्तावुपायचिकीर्षात्वेनेष्टसाधनतालिङ्गककार्यताज्ञानस्य साध्यसाधनताभावाकल्पनात् । अतो नेष्टसाधनतालिङ्गककार्यताज्ञानस्याप्युपायचिकीर्षाद्वारा प्रवृत्तिहेतुत्वम् । किन्तु बलवदनिष्टाननुबन्धीष्टसाधनताविषयककृतिसाध्यताज्ञानमेव सर्वत्र प्रवर्तकमिति दिक् ।

---

१. 'नसा' ख. पाठः. २. 'कार्यता' क. पाठः.

ननु कथमिष्टसाधनत्वं कृतिसाध्यत्वं चैकस्मिन्नेकदा ज्ञातुं शक्यम् । साधनत्वस्य सिद्धधर्मत्वात् साध्यत्वस्य चासिद्धधर्मत्वादुभयोर्विरोधादिति चेद्[1], न । नह्येकस्मिन् क्षण एवात्र साधनत्वसाध्यत्वे अवगन्तव्ये[2], येन विरोधः स्यात् । किन्तु सिद्ध्यनन्तरं साधनतायोग्यस्येदानीन्तनकृतिसाध्यत्वमेव ज्ञेयमित्यविरोधात् । न चेदानीमिष्टसाधनत्वज्ञानस्यैव प्रवर्तकत्वे कथमविरोध इति वाच्यम् । सत्यम् । इदानीन्तनत्वमिच्छान्वयि, न साधनान्वयि । इदानीन्तनेच्छाविषयं प्रति क्षणान्तरे साधनस्येदानीन्तनकृतिसाध्यत्वज्ञानाविरोधात् । कथमन्यथा तवापीदानीमिष्टसाधनतालिङ्गादिदानीं कृतिसाध्यताज्ञानमिति दिक् ।

नन्वेवमपीष्टविषयककृतिसाध्यताज्ञानमेव प्रवर्तकमस्तु । बलवदनिष्टाननुबन्धीष्टसाधनताविषयककृतिसाध्यताज्ञानापेक्षया लघुत्वात् । तावताप्यनिष्टजनके इष्टाजनके चेच्छानुदयेन प्रवृत्त्यनापत्तेः । न चेष्टोपायेष्विष्टसाधनताज्ञानं विना नेच्छेतीष्टसाधनताविषयककृतिसाध्यताज्ञानादेव तत्र चिकीर्षाद्वारा प्रवृत्तिसम्भवादन्तरोपायविषयकेच्छाकल्पने मानाभावान्नेष्टविषयककृतिसाध्यताज्ञानं प्रवर्तकं, किन्त्विष्टसाधनताविषयककृतिसाध्यताज्ञानमेव तथेति सर्वत्र तज्ज्ञानमेव प्रवर्तकमिति वाच्यम् । सुखचिकीर्षायां लाघवाच्चिकीर्षात्वावच्छेदेनेष्टविषयककृतिसाध्यताज्ञानस्यैव हेतुत्वकल्पनात् । उपायचिकीर्षायामपि तद्धेतुत्वसिद्धयेऽन्तरोपायेच्छाकल्पनायाः प्रामाणिकत्वात् । न चेष्टसाध-

१. 'नह्ये' ख. पाठः. २. 'व्ये । न ये' ख. पाठः.

नताज्ञानं विनोपायेषु नेच्छाविषयत्वं सम्भवतीति वाच्यम् । सत्यम् । इष्टसम्पत्त्यर्थमस्तु तत्रेष्टसाधनताज्ञानम् । प्रवृत्तिस्त्विष्टविषयककृतिसाध्यताज्ञानादेवेति चेद् , न । वृष्टीच्छायां लाघवादुपायेच्छात्वावच्छेदेनेष्टसाधनताज्ञानस्य हेतुत्वसिद्धावुपायचिकीर्षायामपीष्टसाधनताज्ञानं हेतुरिति चिकीर्षाद्वारेष्टसाधनताज्ञानं प्रवृत्तिहेतुरिति दिक् ।

नन्वेवमपि शाब्दबलवदनिष्टाजनकत्वज्ञानं न प्रवर्तकम् । तथा सति बहुवित्तव्ययायाससाध्यतया बहुतरदुःखजनके यागादौ प्रवृत्तिर्न स्यादिति चेद् , न । इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वस्यैव बलवदनिष्टेत्यादिना विवक्षितत्वात् । न चैवं यदृच्छागतकामिनीदर्शने सुखमात्रजनक इष्टोत्पत्तिनान्तरीयकदुःखाप्रसिद्धेस्तादृशदुःखाधिकदुःखाजनकत्वाभावान्न प्रवृत्तिः स्यादिति वाच्यम् । स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकं यत्[1] तदन्यत्वज्ञानं प्रवर्तकम् । तच्च तत्राप्यक्षतम् । नन्विष्टोत्पत्तिनान्तरीयकदुःखत्वं नाम न तावदिष्टोत्पत्तिर्यावता दुःखेन विना न सिध्यति तादृशदुःखत्वम् । तथा सत्यगम्यागमनादाविष्टोत्पत्तेर्नरकं विनाप्यसिद्धेस्ततोऽधिकदुःखजनकत्वाभावात् तत्र प्रवृत्तिः स्यात् । नापीष्टोत्पत्तिर्यावतैहिकेन दुःखेन विना न भवति, तादृशदुःखत्वमेव नान्तरीयकदुःखत्वम् । ततश्चागम्यागमनादौ[2] ततोऽधिकनरकदुःखजनकत्वज्ञानान्न प्रवृत्तिरिति वाच्यम् । तर्हि बहुलतर-

१. 'तत्तद' ख. पाठः. २. 'दौ न' क. पाठः.

दुःखजनके स्वल्पसुखसाधने कर्मणि प्रेक्षावतां प्रवृत्त्यापत्तिरिति चेद्, न। स्वजन्यसुखानुभवकालान्यूनकालानुभाव्यदुःखाजनकत्वमेव बलवदनिष्टाननुबन्धित्वम्। तदेव च विध्यर्थः। न चैवमलसानां सन्ध्यावन्दनादौ तादृशदुःखाजनकत्वज्ञाने[1]सत्त्वात् कथं विहितकालेष्वप्रवृत्तिरिति वाच्यम्। तादृशदुःखे तदीयबलवद्द्वेषस्यापि सहकारित्वात्। अलसानां च तदभावात्। न चैवं विध्यर्थज्ञानमेव प्रवर्तकमिति न स्यादिति वाच्यम्। इष्टत्वात्। विधिवाक्यजन्यज्ञानस्य प्रवर्तकज्ञानोपयोगित्वमात्रमिति सर्वाभ्युपेयत्वात्। अन्यथा विधिना कृताविदानीन्तनत्वमदीयत्वाद्यबोधेऽप्य[2]प्रवृत्त्यापत्तेः। 'न कलञ्जं भक्षयेदि'ति निषेधवाक्यस्यापि स्वजन्यसुखानुभवकालान्यूनकालानुभाव्यदुःखाजनकत्वरूपस्य विध्यर्थस्याभाव एवार्थः। न चैवं कलञ्जभक्षणादौ तादृशदुःखजनकत्वज्ञानवतो रागोत्कर्षेऽपि निवृत्तिः स्यादिति वाच्यम्। तादृशदुःख उत्कटद्वेषस्य निवृत्तावपि सहकारित्वात्। रागान्धस्य च तदभावान्न निवृत्तिः। उत्कटत्वं च जातिविशेषः। क्वचिदुत्कटः क्वचिदनुत्कटश्चैको द्वेषोऽसिद्ध एव, येन जातिसाङ्कर्यं स्यादिति दिक्।

ननु बलवदनिष्टाजनकत्वं न विध्यर्थः। न वा तज्ज्ञानं प्रव[3]र्तकम्। किन्तु बलवदनिष्टजनकत्वज्ञानस्य प्रतिबन्धकतया तादृशज्ञानाभाव एव हेतुः। न चैवं कृत्यसाध्यताज्ञानस्य प्रतिबन्धकतया तदभाव एव हेतुः स्यात्, न कृतिसाध्यताज्ञा-

---

१. 'नात्' क. पाठः. २. 'पि प्र' क. पाठः. ३. 'वृत्तिहेतुः। कि' ख. पाठः.

नमिति वाच्यम् । लाघवेन कृतिसाध्यताज्ञानस्यैव हेतुत्वकल्पनात् । प्रकृते च बलवदनिष्टाजनकत्वज्ञानस्य प्रवर्तकत्वे बलवदनिष्टाजनकत्वस्यापि विध्यर्थता स्यात् । प्रवर्तकज्ञानविषयस्यैव विध्यर्थत्वात् । तथात्वे च 'श्येनेनाभिचरन् यजेते'[1]त्यादौ विध्यनुपपत्तिः । श्येनस्य वैरिवे[2]धार्थत्वेन बलवद[3]निष्टजनकत्वात् । न च श्येनेन[4] नानिष्टं, किन्तु तज्जन्यहिंसयैवेति वाच्यम् । श्येनस्याप्युपपातकेषु परिगणनो[5]च्छिष्टविगर्हणाच्चानिष्टजनकत्वावश्यम्भावात् । साक्षाद्धिंसाया एवानिष्टजनकत्वे प्रेरकादेरपि दोषकीर्तनानुपपत्तेः[6] । तस्माच्छ्येनविध्यनुपपत्तेर्न बलवदनिष्टाजनकत्वं विध्यर्थ इति चेद्, न । एवं सत्यग्नीषोमीयं पशुमालभेतेति विधिः पशुहिंसायाः कृतिसाध्यत्वे सतीष्टसाधनतामेव ब्रूयाद्, न हिंस्यादिति निषेधश्च हिंसाया बलवदनिष्टजनकत्वम् । ततो द्वयोर्विरोधाभावात् सामान्यविशेषभावेनाविरोध इति सिद्धान्तो व्याहन्येत । बलवदनिष्टाजनकत्वस्यापि विध्यर्थत्वे त्वग्नीषोमीयवाक्येन[7] हिंसाया बलवदनिष्टाजनकत्वस्य न हिंस्यादिति निषेधेन हिंसाया बलवदनिष्टजनकत्वस्य च बोधनाद् विरोधे सति सामान्यशास्त्रस्य विशेषशास्त्र[8]विषयातिरिक्तविषयत्वकल्पनेनाविरोध इति सिद्धान्तो घटेत । तस्माद् बलवदनिष्टाजनकत्वमपि विध्यर्थः । तज्ज्ञानं च प्रवर्तकम् । न चैवं श्येनविध्यनुपपत्तिरित्युक्तमिति वाच्यम् । तत्र बलवदनिष्टाजन-

---

१. 'नाभिचारे य' क. पाठः. २. 'यातनात्वे' क. पाठः. ३. 'दिष्ट' क. पाठः. ४. 'नानि' क. पाठः. ५. 'नाद्विग' क. पाठः. ६. 'त्तेश्च ।' क. पाठः. ७. 'न ब' क. पाठः. ८. 'बशादति' ख. पाठः.

कत्वांशस्यायोग्यतयानन्वयोपपत्तेः । ननु कृतिसाध्यत्वबलवद-निष्टाजनकत्व[1]विशिष्टेष्टसाधनत्वस्य[2] विध्यर्थतया तत्र कृतिसाध्य-त्वविशिष्टेष्टसाधनत्वमात्रस्यापरपदार्थान्वयार्थं स्वतन्त्रोपस्थितये लक्षणा स्यात् । सा चायुक्ता 'न विधौ परः शब्दार्थ' इति न्या-यात् । न च गौरनित्येत्यादाविव विशेष्यस्येष्टसाधनत्वस्यापरप-दार्थान्वये न लक्षणेति वाच्यम् । विनिगमनाविरहेणेष्टसाधन-त्वस्यैव विशेष्यत्वे मानाभावादिति चेत् । सत्यम् । त्रयाणामपि कृतिसाध्यत्वादीनामन्वयव्यतिरेकतौल्येन विनिगमनाविरहात् त्रयमपि पृथगेव शक्यम् । न चैवं शक्तित्रयाङ्गीकारे नानार्थता-पत्तिरिति वाच्यम् । पुष्पवत्पदे दिवाकरनिशाकरयोरिव विधौ कृतिसाध्यत्वादिष्वेकस्या एव शक्तेः कल्पनात् । ततश्च कृति-साध्यत्वादिषु त्रिष्वपि स्वातन्त्र्येण श्येनविधिनोपस्थितेषु कृति-साध्यत्वेष्टसाधनत्वयोरेव तत्र यागान्वयः, न बलवदनिष्टाजन-कत्वस्यापि[3], अयोग्यत्वादिति न विधौ लक्षणापत्तिरिति दिक् ।

ननु तथापि कृतिसाध्यत्वे न विधेः शक्तिः, आख्यात-त्वेन ततः कृत्युपस्थितौ धात्वर्थे तत्साध्यत्वस्य संसर्गमर्यादयैव भानोपपत्तेः । न चैवमपि कृतिसाध्यत्वप्रकारकज्ञानाभावे कृतिसाध्यत्वप्रकारकचिकीर्षासम्भवेन प्रवृत्त्यनुपपत्तेः कृतिसा-ध्यत्वप्रकारकज्ञानाय कृतिसाध्यत्वेऽपि विधेः शक्तिरावश्यिकेति वाच्यम् । विधिना संसर्गमर्यादया कृतिसाध्यत्वज्ञाने सति पश्चान्मनसा तत्प्रकारकज्ञानसंभवादिति चेद्, न । कृतेर्धात्व-

१. 'त्वा' क. पाठः. २. 'स्या' क. पाठः. ३. 'स्यायो' क. पाठः.

र्थस्य च विषयिविषयभाव एव संसर्गः, न तु साध्यसाधनभाव इति न कृतिसाध्यत्वस्य संसर्गमर्यादया भानसंभवः। न च विषयतैव साध्यतेति वाच्यम्। ज्ञानस्वरूपातिरिक्तविषयतायाः प्रत्यक्षस्थल एव निरासेन तस्याः कृत्यनन्तरभविष्यत्तारूपसाध्यत्वाभेदासंभवात्। तर्हि विषयतया साध्यत्वानुमानमस्त्विति वाच्यम्। अनुमानस्य व्याप्तिग्रहादिविलम्बेनानावश्यकतया विधिस्थले नियमतः कृतिसाध्यत्वप्रतीत्यभावप्रसङ्गाद्, असाध्यस्यापि विषयत्वसंभवेन व्याप्त्यभावाद्व विषयतया साध्यत्वानुमानासम्भवाच्चेति दिक्।

नन्वेवमपीष्टसाधनताज्ञानं न प्रवर्तकम्। नित्ये फलाभावात्। नित्यस्यापि फलवत्त्वे कामनोपाधिकर्तव्यतया कामनाभावे तदनुष्ठानभङ्गप्रसङ्गात्। तस्मान्नित्ये वेदाधीनकार्यताज्ञानमेव प्रवर्तकमिति काम्येऽपीष्टसाधनतालिङ्गककार्यताज्ञानमेव तथा, न त्विष्टसाधनताज्ञानमपीति चेद्, न। निष्फले प्रवृत्त्यसम्भवेन

"सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥"

इति श्रुतायाः पापनिवृत्तेर्ब्रह्मलोकावाप्तेश्च नित्येऽपि[1] फलत्वकल्पनात्। न चैवमुक्तफलकामनावत एवाधिकारात् कदाचित् कामनाविरहे नित्याननुष्ठानेऽपि प्रत्यवायो न स्याद्, अधिकारिण एव नित्यकर्माकरणस्य प्रत्यवायहेतुत्वादिति वा-

१. 'त्यत्रेऽपि' ख. पाठः.

च्यम् । जीवतः शुचेरकरणे प्रत्यवायस्मरणेन शुचित्वे सति[1] विहितकालजीवित्वस्यैवाधिकारिविशेषणत्वकल्पनान्न कामना-विरहे नित्याननुष्ठाने प्रत्यवायाप्रसक्तिः । न चैवं तदानीमिष्टसा-धनताज्ञानविरहात् कथं प्रवृत्तिरिति वाच्यम् । तदानीमपि प्रत्यवायानुत्पत्तिरूपेष्टसाधनताज्ञानस्यैव नित्येऽपि सम्भवान्न प्र-वृत्त्यनुपपत्तिरिति दिक् ।

नन्विष्टसाधनताप्रकारकज्ञानवत् साध्येष्टकत्वप्रकारकज्ञा-नमपि हेतुः । विनिगमनाविरहात् । तथा चाननुगम इति चेद्, न । साध्येष्टकत्वज्ञानेऽपि समानसंवित्संवेद्यतया इष्टसाधन-त्वस्यापि विषयतयेष्टसाधनत्वावगाहिज्ञानत्वेनोभयोरनुगमसम्भ-वादुभयोर्हेतुत्वेऽपि न किञ्चिद् बाधकम् । नन्विष्टसाधनताज्ञा-नस्य हेतुत्वे इच्छाज्ञानस्यापि हेतुत्वापत्तिरिति चेद्, न । वस्तुतो यः स्वरूपसदिच्छाविषयस्तत्साधनताज्ञानस्यैव हेतुत्वात् । न चैवमपि विधितः सामान्येष्टसाधनताज्ञानेऽपि स्वर्गादिरूपेष्टवि-शेषसाधनताज्ञानाभावात् कथं प्रवृत्तिरिति वाच्यम् । विधिना सामान्यत इष्टसाधनत्वे बोधिते किं तदिष्टमित्याकाङ्क्षायां स्व-र्गादिपदसमभिव्याहारात् स्वर्गादिरूपेष्टसाधनतावगमसम्भवात् । नन्वेवं साधनत्वमात्रं विध्यर्थोऽस्तु । कस्य साधनत्वमित्याकाङ्क्षा-[2]यां समभिव्याहारादिना स्वर्गादिसाधनताधीसम्भवात् । न चैवं विश्वजिता यजेतेत्यत्र समभिव्याहाराभावात् स्वर्गसाध-नताधीर्न स्यादिति वाच्यम् । तत्रापि साध्याकाङ्क्षायां सर्वाभ्य-

१. 'ति जी' क. पाठः. २. 'नमि' ख. पाठः.

र्हितत्वेन स्वर्गस्यैव साध्यतया कल्पनादिति चेद्, न। साधनत्वमात्रस्य विध्यर्थत्वे साधनत्वस्यानुगतस्याभावाद् विधेर्नानार्थतापातः। न चैवमिष्टसाधनत्वपक्षेऽपि स[1] दोषस्तदवस्थ इति वाच्यम्। तत्रेच्छात्वजात्येच्छायास्तया स्वविषयस्य तेन साधनत्वस्यानुगतिसम्भवात्। अत एव गन्धत्वादिजात्या परम्परासम्बन्धेन गन्धवत्त्वाद्युपाधेरनुगमादनुगतव्यवहारः। तस्मादिष्टसाधनत्वमेव विध्यर्थ इति दिक्।

अयं च विधिरपूर्वविधिर्नियमविधिः परिसंख्याविधिश्चेति सामान्यतस्त्रिविधः। तत्र कालत्रयेऽप्यप्राप्तस्य विधिरपूर्वविधिः। यथा — व्रीहीन् प्रोक्षतीत्यत्र व्रीहीणां प्रोक्षणस्य विधिं विना मानान्तरेणाप्राप्तेरपूर्वविधिः। पक्षे प्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्नियमविधिः। यथा — व्रीहीनवहन्तीत्यत्रैतद्विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्यर्थमाक्षेपादेवावहननप्राप्तिर्भविष्यतीति न तत्प्राप्त्यर्थो विधिः, किन्त्ववहननवदाक्षेपान्नखविदलनमपि प्राप्नुयादित्यवहननाप्राप्त्यंशसम्भवात् तदंशोऽप्यवहननप्रापणार्थोऽयं विधिरित्यप्राप्तांशपरिपूरणफलकः[2]। द्वयोरेकस्य प्राप्तावेकत्र तन्निवृत्तिफलको विधिः परिसंख्याविधिः। यथा — "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमाधत्ते" इत्यत्रैतद्विध्यभावेऽपि अयं मन्त्रोऽग्निचयने पठितः। तत्रानुष्ठेयाश्वरशनाग्रहणे गर्दभरशनाग्रहणे च रशनाग्रहणप्रकाशनसामर्थ्यरूपेण लिङ्गेन नित्यं प्राप्नोतीति न तत्प्रा-

१. 'तद्दोषतादवस्थ्यमिति' ख. पाठः. २. 'को विधिः। द्व' क. पाठः.

प्त्यर्थः, नाप्यप्राप्तांशपरिपूरणार्थो वा, किन्तु, लिङ्गाविशेषाद् गर्दभरशनाग्रहणेऽपि प्राप्नुयादिति तन्निवृत्त्यर्थोऽयं विधिः।

ननु परिसङ्ख्यायां मन्त्रस्य गर्दभरशनातो निवृत्तिरिव नियमविधावपि व्रीहिषु नखविदलननिवृत्तिरपीष्टेति कथं नियमपरिसङ्ख्ययोः फलभेद इति चेद्, न। नियमविधाववघाताप्राप्त्यव्रीह्यंशे[1]ऽप्यवघातप्रापणं विनाक्षेपलभ्य[2]स्य नखविदलन[3]स्य निवृत्तिर्न सम्भवतीति प्रथमोपस्थितत्वाद् विधेयावहननगतत्वेन प्रत्यासन्नत्वाच्चाप्राप्तांशपरिपूरणरूपो नियम एव फलं, न तूपायान्तरनिवृत्तिः। तस्याश्चरमोपस्थितत्वादविधेयगतत्वेन विप्रकृष्टत्वाच्च। परिसङ्ख्यायां तु द्वयोर्मन्त्रस्य नित्यप्राप्तत्वेनापूर्वविधिवत् स्वरूपप्राप्तेर्नियमविधिवदप्राप्तांशपरिपूरणस्य वा फलत्वासम्भवाद् गर्दभरशनानिवृत्तिरेव फलमङ्गीक्रियते। अत एव परिसङ्ख्याविधेर्न स्वार्थे तात्पर्यम्। 'अप्राप्ते शास्त्रमर्थवदि'ति न्यायेन मन्त्रलिङ्गप्राप्तेऽनेन मन्त्रेणाश्वरशनादातव्येति स्वार्थे तात्पर्यायोगादिति स्वार्थस्त्यक्तव्यः, तथा गर्दभरशना नादातव्येति परार्थे लक्षणा वाच्येति परार्थग्रहणं, सामर्थ्याद् गर्दभरशनाग्रहणेऽपि प्राप्तस्य मन्त्रस्य बाधश्च स्वीकार्य इति प्राप्तबाधश्चेति त्रैदोष्यात् परिसंख्याविधेर्नियमविधितो जघन्यता। तस्मादत्यन्ताप्राप्ते विधिरपूर्वविधिः। पाक्षिकप्राप्तौ विधिर्नियमविधिः। उभयत्र प्राप्तौ विधिः परिसंख्याविधिः। तदुक्तं—

१, 'नाप्रा' क. पाठः. २. 'भ्यन' क. पाठः. ३. 'ननि' क. पाठः.

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते[1] परिसंख्येति गीयते ॥"

इति । एवमन्येऽपि विधिभेदा विस्तरभयान्न लिख्यन्त इति संक्षेपः ॥

इति विधिवादः ॥

अथापूर्ववादः ।

अत्र प्राभाकराः — 'पुष्टिकामो घृतं पिबेदि'त्यादिलौकिकलिङां प्रथमत एव क्रियागतेष्टसाधनत्वकृतिसाध्यत्वबोधकत्वेऽपि स्वर्गकामो यजेतेत्यादिवैदिकलिङां न प्रथमत एव क्रियागतेष्टसाधनत्वकृतिसाध्यत्वबोधकता सम्भवति । तथाहि — वैदिकलिङां[2] हि नियोगो वाच्यः । ततश्च स्वर्गादिसाधनत्वे[3]नावगते तस्मिन् यागविषयकं कार्यमिति प्रथमं कृतिसाध्यताबोधो जायते । तस्य च बोधस्य मदंशा[4]द्यविषयतया प्रवर्तकत्वासंभवादनन्तरं स्वर्गकामस्य मम यागविषयकं कार्यमिति पुनस्तस्मिन्नेव नियोगेऽनुपपत्तिसहायेन शब्देनैव द्वितीयः कार्यताबोधो जायते । ततश्च नियोगस्य फलत्वेन[5] साक्षात् कृत्यसाध्यतया नियोगविषयककार्यताज्ञानस्य भिन्नविषयतया यागे प्रवर्तकत्वासंभवाच्च यागविषयकं कार्यताज्ञानं प्रथमावगतनियोगकार्यतानिर्वाहकतयावश्यं वाच्यम् । तच्च कामी हि का-

१. 'प्तौ' ख. पाठः. २. 'ङा' क. पाठः. ३. 'त्वेऽव' ख. पाठः. ४. 'शावि' क. पाठः. ५. 'लतुल्यत्वे' क. पाठः.

स्यादन्यत् काम्यसाधनतयावगतमेव कर्तव्यतयावैतीति न्यायाद् यागे काम्यसाधनताज्ञानं विना न भवतीति प्रथमप्रतीत-नियोगद्वारा स्वर्गसाधनतया प्रतीतस्य यागस्य कार्यत्वं ज्ञात-व्यमिति स्वर्गसाधनतया ज्ञाते यागे काम्यस्वर्गसाधनं यागः स्वर्गकामकृतिसाध्य इति तृतीयोऽपि बोध औपादानिकः शब्दा[1]-देव जायते । अयमेवाधिकारित्वबोध इत्युच्यते । ततो याग-कृतिः कर्तारं विनानुपपन्नेति ज्ञानसहायेन शब्देनैव स्वर्गकामो यागकर्तेति चतुर्थ औपादानिकः कर्तृत्वबोधो जन्यते । एवमपि मदंशाद्यज्ञाने प्रवृत्तिर्नेति स्वर्गकामस्य यागः कार्यः, अहमपि स्वर्गकामः, तस्मान्ममापि यागः कार्य इति ज्ञानसहायेनेष्ट-वत्फलपर्यन्तदीर्घव्यापारवता शब्देनैव पञ्चमो बोध उत्पद्यत इत्यस्माकं सिद्धान्तसरणिः । ततश्च प्रथमं साक्षात् स्वर्गसाधन-तयावगते नियोगे कृतिसाध्यताज्ञाने सति नियोगकृतिसाध्य-तानिर्वाहाय पश्चादेवेष्टसाधनताज्ञानपूर्वकं यागे कृतिसाध्य-ताज्ञानं शब्दात् । न तु प्रथमम् । वस्तुतस्तु स्वर्गकामस्य मम यागविषयकमपूर्वं कार्यमिति नियोगविषयकद्वितीयकार्यताबो-धादेव प्रवृत्तिसिद्धेर्न यागे पश्चादपि कृतिसाध्यताज्ञानम् । न च भिन्नविषयकस्य नियोगविषयककार्यताज्ञानस्य कथं याग-विषयकप्रवृत्तौ हेतुत्वम् । अन्यथातिप्रसङ्गादिति वाच्यम् । या-गविषयकं[2] कार्यमिति नियोगगतकार्यताज्ञानस्य यागविषयक-तया समानविषयकत्वेन यागे प्रवर्तकत्वेऽप्यातिप्रसङ्गाभावेन गौ-रवेण समानविशेष्यकत्वस्यातन्त्रत्वात् । अतः क्रियायां न

---

१. 'शा' क. पाठः. २. 'कमपूर्वं का' क. पाठः.

कृतिसाध्यताज्ञानं प्रवृत्तिहेतुः । स्यादेतदेवम्, यद्यपूर्वस्य वाच्यता स्यात् । तस्यामेव न प्रमाणमिति चेद्, न । आशुतरविनाशिनो यागस्य कालान्तरभाविस्वर्गं प्रति साक्षात्साधनत्वबाधात् परम्परासाधनत्वमेव ग्राह्यम् । तच्च परम्पराघटकापूर्व[1]ज्ञानं विना नेत्यपूर्वे लिङादिशक्तिरावश्यिका । न च त्वन्मते[2] जलाहरणान्वययोग्यतावच्छेदकस्यच्छिद्रेतरत्वस्य पदा[3]दनुपस्थितस्याप्यन्वयप्रकारतया शाब्दबोधविषयत्वाभ्युपगमादिहापि यागे स्वर्गसाधनत्वान्वययोग्यतावच्छेदकस्यापूर्वस्य पदा[4]दनुपस्थितस्यापि यागस्वर्गान्वयप्रकारतया शाब्दबोधविषयतोपपत्तेर्न तत्र लिङादेः शक्तिकल्पनेति वाच्यम् । योग्यतावच्छेदकत्वेन पूर्वं ज्ञातस्यैवान्यत्रान्वयप्रकारतया शाब्दधीविषयत्वमिति परेषाम[5]प्यभिमतम् । अन्यथा घटमात्रं जलाहरण[6]योग्यमिति ज्ञानतोऽपि घटेन जलमाहरेत्यत्रच्छिद्रेतरत्वभानापत्तेः । तथाचापूर्वस्य पूर्वानुपस्थितस्य योग्यतावच्छेदकत्वज्ञानासम्भवात् तज्ज्ञानार्थमपूर्वे लिङादिशक्तिरावश्यिका ।

नन्वेवं 'सोमेन यजेते'त्युत्पत्तिवाक्येऽपि नियोगे कार्यताधीः स्यात् । न चेष्टापत्तिः । उत्पत्तिविधौ यागः कर्तव्य इति क्रियाकार्यताज्ञानमेवोत्पद्यत इति भवत्सिद्धान्तहानेरिति चेद्[7], न । कालान्तरभाविफलसमभिव्याहृतलिङामेव प्रथमत एवापू-

१. 'र्वं विज्ञा' क. पाठः. २. 'त' क. पाठः. ३. 'दानु' क. पाठः. ४. 'दानु' क. पाठः. ५. 'मां मतम्' क. पाठः. ६. 'णे' क. पाठः. ७. 'चेत् का' क. पाठः.

वेवाचकत्वमित्यभ्युपगमात् । न चैवं वैदिकलिङ्त्वावच्छेदेना-
पूर्वशक्तिरिति भवत्सिद्धान्तहानिरिति वाच्यम् । उत्पत्तिवा-
क्येऽपि क्षणिकानां सोमयागानां[1] कालान्तरभाविपरमापूर्वसाध-
नत्वाय कल्प्यमानानामुत्पत्त्यपूर्वाणामपि लिङ्[2]वाच्यतयैव कल्प-
नात् । नन्वपूर्वस्य वैदिकलिङ्वाच्यत्वे 'यो ब्राह्मणायापगुरेत्,
तं शतेन यातयादि'त्यत्रापगोरणस्य कालान्तरभाविनरकयातना-
जनकत्वानुपपत्त्या दुरितापूर्वमपि लिङ्वाच्यं स्यादिति चेद्, न।
सिद्धार्थे व्युत्पत्तिविरहेणापगोरणं[3] शतयातनाफलकमिति सि-
द्धार्थ[4]बोधकत्वा[5]सम्भवात् । तस्माद् ब्राह्मणाय नापगुरेतेति प्रति-
षेधविधिशेषोऽयमर्थवाद इति तत्रापूर्वस्यावाच्यत्वेऽपि न हा-
निः । विधिलिङामेव[6] तद्वाचकत्वाभ्युपगमात् । नन्वेवं तत्र
दुरितापूर्वप्रतीतिः कथमिति चेदित्थम् । नापगुरेतेति प्रतिषेधवि-
धावपगोरणनिवृत्तिविषयककार्यता प्रतीयते । तत्रापगोरणस्य दु-
रितादृष्टाहेतुत्वे तन्निवृत्तेः कार्यताप्रतीतिर्न स्यात्, तस्याः स्वतः
पुरुषार्थत्वाभावात् । अपगोरणस्य तद्धेतुत्वे तु भवत्यपगोरणं[7]नि-
वृत्तिर्दुरितकारणानिवृत्तित्वेन सफलेति तत्र कार्यताबोध इत्यप-
गोरणनिवृत्तौ कार्यताबोधानुपपत्त्यापगोरणस्य दुरितापूर्वसाध-
नत्वकल्पनमिति दिक् ।

ननु तन्मते नित्यस्थले कालान्तरभाविफलाभावेन क्रि-

---

१. 'गाभ्यासानां' ख. पाठः. २. 'ङा वाच्य' क. पाठः. ३. 'णं या' ख. पाठः. ४. 'र्थे' ख. पाठः. ५. 'त्व' क. पाठः. ६. 'व तु त' ख. पाठः. ७. 'णे' क. पाठः.

यायामेव कार्यतान्वयसम्भवान्न नित्यापूर्वसिद्धिरिति चेद्[1] न। काम्यस्थले क्रियायाः स्वर्गकामकृतिसाध्यतान्वयानुपपत्त्या लिङः कार्यत्वविशिष्टे शक्तौ कल्प्यायां[2] लाघवेन वैदिकलिङ्त्वावच्छेदेन क्रियाभिन्नकार्यत्व[3]विशिष्टे शक्तिकल्पनान्नित्यापूर्वसिद्धिः। ननु शाब्दानुभवात्[4] पूर्वम्[5] अपूर्वत्वेनापूर्वोपस्थितावपूर्वत्वव्याघातः। तत्त्वेनानुपस्थितौ कथं तत्र शक्तिग्रह इति चेद्, न। कार्यत्वेन घटाद्युपस्थितौ कार्यत्वेन तत्र शक्तिधीः। शाब्दधीस्तु घटादेः स्वर्गकामकार्यतान्वयायोग्यत्वात् कार्यत्वेनापूर्वमेव विषयीकरोति। न चान्यस्य शक्तिग्रहविषयत्वम् अन्यस्य शाब्दबोधविषयत्वमित्ययुक्तम्, अतिप्रसङ्गादिति वाच्यम्। समानप्रकारकत्वस्य नियामकत्वात्। ननु कार्ये[6]ऽपि स्थायित्वानिश्चयात् कथं स्वर्गकामस्य[7] कार्यताधीरिति वाच्यम्। स्थायित्वविशिष्टे कार्ये[8] शक्तिरित्येके। अन्वयितावच्छेदकतया स्थायित्वधीरित्यपरे।

ननु लोके पाकादेः[9] कार्यस्य धातुत एवोपस्थितेः[10] कार्यत्वमात्रे लिङः शक्तिः। न तु कार्यत्वविशिष्टे। वेदे तु कार्यत्वविशिष्टे शक्तिरिति नानार्थतापात इति चेद्, न। कार्यत्वविशिष्टशक्तादेव पदाद् गौर्नित्येत्यत्रेव विशेषणमात्रोपस्थितेर्लक्षणयाप्युपपत्तौ लोके

१. ‘म्य’ क. पाठः. २. ‘ल्प्यमानायां’ क. पाठः. ३. ‘र्यवि’ क. पाठः. ४. ‘श’ क. पाठः. ५. ‘र्वं कार्यत्वेनोप’ क. पाठः. ६. ‘र्ये स्था’ क. पाठः. ७. ‘मकाम्यता’ ख. पाठः. ८. ‘र्यत्वे श’ ख. पाठः. ९. ‘देर्धा’ क. पाठः. १०. ‘ते’ क. पाठः.

कार्यत्वेऽपि शक्तेरकल्पनात्। न च विनिगमनाविरहाद् वेद एव लक्षणा किं न स्यादिति वाच्यम्। 'न विधौ परः शब्दार्थः' इति न्यायात् पौरुषेय एव लक्षणाकल्पनौचित्यात्। ननु लोके वेदे च कार्यतायामेव शक्तिः। लोके समभिव्याहृताद् धातोस्तदाश्रयोपस्थितिः, वेदे त्वाक्षेपादिति न क्वापि लक्षणेति चेद्, एवं सति नित्यस्थलेऽनुपपत्त्यभावात् कार्योपस्थितिर्न स्यात्। तस्माद् वैदिकलिङ्त्वावच्छेदेन कार्ये शक्तिकल्पनायामेव नित्यस्थले कार्यसिद्धिरिति कार्ये शक्तिरेष्टव्या। तस्माद् वेदे न प्रथमतः क्रियान्वयिकार्यताधीरिति पूर्वपक्षसङ्क्षेपः।[1]

अत्रोच्यते — यदुक्तं शाब्दबोधस्यान्वयितावच्छेदकप्रकारकत्वनियमात् साक्षादसाधनस्य[2] यागस्य स्वर्गसाधनताबोधेऽन्वयितावच्छेदकस्यापूर्वस्य प्रकारता वाच्या। सा च न पूर्वाज्ञातस्य सम्भवतीत्यपूर्वे लिङ्वाच्यता कल्पनीयेति। तन्न। तादृशनियमे मानाभावात्। न च घटेन जलमाहरेत्यत्रच्छिद्रेतरत्वभानमेव मानमित्युक्तमिति वाच्यम्। तत्र वस्तुतश्छिद्रेतरघटस्य घटत्वेन भानेऽपिच्छिद्रेतरघटत्वेनाभानात्। अन्यथा घटपदस्यच्छिद्रेतरघटे लक्षणापत्तेः। शब्दानुपस्थितस्य शाब्दबोधाविषयत्वात्। न च क्षणिकस्य यागस्य कालान्तरफलं प्रत्ययोग्यत्वनिश्चयात् कथं तत्र साधनताधीरिति वाच्यम्। अनुभवस्य स्मृतौ जनयितव्यायां संस्कारस्येवात्रापि कस्यचित स्थायिनो व्यापारस्य सम्भवेनायोग्यतानिश्चयविरहाद् योग्य-

१. 'याका' क. पाठः. २. 'स्य स्व' क. पाठः.

तासंशयस्य चानुकूलत्वात् । नन्वेवमपि साधनत्वसामान्यबोधकस्यापि साक्षात्साधनत्वबा[1]धे परम्परासाधनत्वप्रकारकज्ञानजनकत्वनियमात् परम्पराघटकत्वेनापूर्वस्य शाब्दबोधविषयत्वमङ्गीकार्यमिति चेद्, न । सामान्यबोधजनकस्य मानस्यैकविशेषबा[2]धे विशे[3]षान्तरविषयकज्ञानजनकत्वमेव, न तु विशेषान्तरप्रकारकज्ञानजनक[4]त्वम् । अन्यथा गृहवर्तिनं घटमानयेत्यत्रापि पीतघटबाधे नीलघटत्वादिप्रकारकज्ञानजननापत्तेः । तस्मात् साधनत्वसामान्यशक्तेन लिङ्पदेनायोग्यतानिश्चयविरहादपूर्वोपस्थितिं विनापि सा[5]धनत्वमात्रप्रकारकबोधे जाते पश्चात्प्रतीतसाधनत्वानुपपत्त्यापूर्वकल्पनमित्येव वाच्यम् । अन्यथा 'पुष्टिकामो घृतं पिबेदि'त्यादावपि घृतपानस्य साक्षात्कालान्तरभाविपुष्टिसाधनत्वबाधात् तद्व्यापारस्य धातुसाम्यादेरपि वाच्यताकल्पनापत्तेरिति दिक् ।

नन्वपूर्वकल्पनायामपि किं प्रमाणं[6], चिरध्वस्तादेव यागात् फलसम्भवात् । व्यापारकल्पनेऽपि तस्य व्यापारस्य यागगतानन्यथासिद्धत्वनियतपूर्ववृत्तित्वांशेषु क्वाप्युपयोगाभावेनाप्रयोजकत्वादिति चेद्, न । एवं सति चिरध्वस्ताद् दण्डादपि घटोत्पादापत्तिः । न च भ्रम्यभावान्न तदुत्पत्तिरिति वाच्यम् । तर्हि भ्रमिरेव चिरध्वस्तदण्डात् किं न जायेत । तस्माद-

१. 'बो' क. पाठः. २. 'बो' क. पाठः. ३. 'षणान्त' क. पाठः. ४. 'कम्' ख. पाठः. ५. 'मान्यमा' क. पाठः. ६. 'म् । ध्व' ख. पाठः.

न्वयव्यतिरेकाभ्यां नष्टस्य व्यापारवत एव हेतुत्वमित्यत्रापि नष्ट-स्य यागस्य स्वर्गसाधनतानिर्वाहाय व्यापारकल्पनावश्यंभा-वात्। न च कल्पितस्यापि तस्यानन्यथासिद्धत्वाद्यंशेषु न का-प्युपयोग इत्युक्तमिति वाच्यम्। पूर्ववर्तित्वघटकतयोपयोगात्। पूर्ववर्तित्वं हि कार्योत्पत्तिपूर्वक्षणवर्तित्वरूपं कार्योत्पत्तिपूर्वक्षणे स्वस्वव्यापारान्यतरसत्तया निर्वाह्यम्। तच्च चिरध्वस्तस्य स्वस-त्तया बाधितमिति स्वव्यापारसत्तया निर्वाह्यम्। नन्वेवमि-ष्टसाधनत्वशक्तेन विधिना कारणत्वघटकतया व्यापारभूतस्या-पूर्वस्योपपादनादपूर्ववाच्यता दुर्वारा स्यादिति चेद्, न। एतादृशवाच्यताया अनन्यथासिद्धत्वादिसाधारणाया अस्माभि-रप्यङ्गीकारात्। कार्यत्वविशिष्टतया लिङ्[2]पदवाच्यतायाः परम-नङ्गीकारात्।

नन्वेवमपि यागादेः स्वध्वंस एव व्यापारोऽस्तु। कृत-मपूर्वकल्पनया। न च प्रतियोगितदभावयोरेकत्राजनकत्वमिति वाच्यम्। घटतदभावसमूहालम्बन इव तदविरोधात्। न च यागध्वंसस्य व्यापारतया कारणत्वे कारणीभूताभावप्रतियोगित्वेन यागस्य स्वर्गे प्रतिबन्धकत्वापत्तिरिति वाच्यम्। संसर्गाभाव-त्वेन कारणीभूतो योऽभावस्तत्प्रतियोगिन एव प्रतिबन्धक-त्वात्। अन्यथा कारणीभूतप्रागभावप्रतियोगितया ज्ञानोत्पत्तौ ज्ञानस्य प्रतिबन्धकत्वापत्तेः। न चेष्टापत्तिः। यज्ज्ञानं यत्र प्रति-बन्धकं, तत्सामग्र्यपि तत्र प्रतिबन्धिकेति ज्ञानसामग्र्या ज्ञाने

१. 'वृत्तित्वं तु का' क. पाठः. २. 'ङ्पद' ख. पाठः.

प्रतिबन्धकतापत्तेः। न च यागः सव्यापारकः कालान्तरभाविफलजनकत्वादिति व्यापारसाधकं प्रमाणं लाघवाद् भावरूपमेव व्यापारं कल्पयतीत्यपूर्वसिद्धिरिति वाच्यम्। अपूर्वस्य व्यापारत्वकल्पने हि धर्मिणस्तस्य तज्जन्य[1]त्वस्य च कल्पने गौरवात् स्वरूपतस्तज्जन्यत्वेन च क्लृप्तस्य[2] ध्वंसस्य तज्जन्यजनकत्वमात्रकल्पनायामेव लाघवात्। अत एव 'ध्वंसस्य व्यापारत्वे मुक्ते पितरि पुत्रकृतश्राद्धादिना सुखोत्पत्तिः स्यात्। व्यापारस्य ध्वंसस्य सत्त्वात्। अपूर्वकल्पने तु मुक्ते पितरि अपूर्वानुत्पत्तेर्नायं दोष' इत्यपास्तम्। ध्वंससत्त्वेऽपि तत्र सुखप्रागभावाभावेन सुखानुत्पत्त्युपपत्तेः। 'धर्मः क्षरति कीर्तनादि'ति[3] च[4] वाक्यं लक्षणया[5] फलाजनकत्वपरम्। न तु नाशपरम्। येन ध्वंसस्य नाशासम्भवाद् व्यापारता न स्यात्। तस्माद् ध्वंस एव व्यापारोऽस्त्विति नापूर्वकल्पनायां प्रमाणमिति चेद्, न। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ तत्तत्सोमयागाभ्यासध्वंसानामनेकेषां व्यापारत्वकल्पने गौरवं, तथा स्नानसन्ध्यावन्दनादीनामप्यनेकक्रियारूपतया तत्तद्ध्वंसानां व्यापारत्वकल्पने गौरवमिति लाघवादेकापूर्वसिद्धिरिति दिक्।

तच्चापूर्वं स्वजनककृतिसमानाधिकरणमेव कल्पयितुमुचितमिति कर्तृगतमेव कल्प्यते। न चैवं जातेष्ट्यादिना पुत्रगतपूतत्वादि फलं न स्यात्। अपूर्वस्य समानाधिकरणफलजनक-

---

१. 'न्यजनकत्व' क. पाठः. २. 'स्य त' क. पाठः. ३. 'ति वा' क. पाठः, ४. 'च ल' ख. पाठः. ५. 'णावश्यकत्वात् फ' ख. पाठः.

त्वानियमादिति वाच्यम् । वचनवशेन तत्र कर्तृगतस्याप्यदृष्टस्य परम्परासम्बन्धेन पुत्रादिगतत्वकल्पनात् । न चैवं गयाश्राद्धकर्तरि पुत्रे मुक्ते तद्गतादृष्टस्यापि नाशात् पितरि स्वर्गो न स्यादिति वाच्यम् । स्वभोजकादृष्टस्यैव स्वमुक्तिविरोधितया मुक्तौ नाशेन श्राद्धजन्यादृष्टनाशा[2]नभ्युपगमात् । तस्मात् कर्तृसमवेतमेवापूर्वमिति प्राञ्चः ।

नव्यास्तु—सर्वापेक्षया फलमेव प्रधानं, कृतेरपि तदर्थत्वात् । ततश्च फलोपपादकमपूर्वं फलसमानाधिकरणकमेव कल्प्यम् । ततश्च जातेष्ट्यादौ पुत्रादिगतमेवादृष्टम् । न सपत्नीकपितृपितामहादिगतफलजनकस्यैकस्य श्राद्धस्य पित्रादिगतानेकादृष्टकल्पनागौरवमिति वाच्यम् । अनेकपुत्रकृतस्य श्राद्धस्यैकफलार्थमनेकादृष्टकल्पनादोषस्य त्वन्मतेऽपि तुल्यत्वात् । न च शास्त्रा[3]देशितं फलं कर्तरीति नियमान्न जातेष्ट्यादिना पुत्रादिगतं फलम् । येन कृतिव्याधिकरणमपूर्वं कल्प्येतेति वाच्यम् । 'पूत एव तेजस्व्यन्नाद इन्द्रियावी भवती'त्यर्थवादानुरोधेन पूतत्वादेः पुत्रादिगतत्वेनैव कल्पनीयतया शास्त्रादेशितमित्यस्यौत्सर्गिकत्वात्[5] । तस्मात् फलसमानाधिकरणमेवापूर्वं कल्प्यत[6] इत्याहुः ॥

इत्यपूर्ववादः ।

१. 'द्धा' ख. पाठः. २. 'शाभ्यु' ख. पाठः. ३. 'दर्शितं' क. पाठः. ४. 'दर्शित' क. पाठः. ५. 'त् फ' क. पाठः. ६. 'ल्पितमित्या' क. पाठः.

## अथ सिद्धार्थवादः ।

नन्वेवं वैदिकलिङामपूर्वे शक्त्यभावेऽपि सर्वेषां पदानां कार्यान्वितस्वार्थे शक्तिरभ्युपेया । तथाहि—गामानयेत्यादि-प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिमुपलभमानो बालः प्रयोज्यवृद्धप्रवृत्तौ प्रयोजकवृद्धवाक्यमेव हेतुतया कल्पयति । प्रवृत्तिश्च न साक्षाच्छ[1]ब्दप्रयोज्या । किन्तु प्रवृत्तिजनकज्ञानजननद्वारेति प्रवृत्तिजनकज्ञाने शब्दस्य प्रयोजकत्वं कल्पयति । कार्यताज्ञानं च प्रवृत्तिजनकमिति स्वप्रवृत्तावधारणादिदं मया [2]कार्यमिति कार्यताज्ञानजनकत्वं शब्दे गृह्णाति । जन्यजनकभावश्च जन्य[3]तावच्छेदकजनकतावच्छेदकयोरग्रहे न सम्भवतीति कार्यान्वितज्ञानत्वं कार्यतावच्छेदकं पदज्ञानत्वं च कारणतावच्छेदकं कल्पयतीति सामान्यतः पदमात्रस्य कार्यान्विते शक्तिं कल्पयति । पश्चादावापोद्वापाभ्यां क्रियाकारकपदानां कार्यान्वित[4]स्वार्थज्ञानजनकतां गृह्णातीति प्रथमक्लृप्तकार्यकारणभावबलादुत्तरकाले गौरवप्रतिसन्धा[5]नेऽपि न कार्यान्वितत्वांशत्यागः, उपजीव्यविरोधात् । तस्मात् कार्यान्वितज्ञानमेव पदजन्यमिति सिद्धार्थस्थले कार्यवाचिपदसमभिव्याहाराभावान्न कार्यान्वितस्वार्थानुभावकत्वं, किन्तु पदादुपस्थितानां पदार्थानामसंसर्गाग्रहमात्रम् । तत एव तत्र व्यवहारश्च । न च त्वन्मते पदानां कार्यान्वित एव शक्तौ पदात् पदार्थोपस्थितिर्वा कथ-

१. 'च्छा' क. पाठः. २. 'कर्तव्यमि' ख. पाठः. ३. 'न्यज' क. पाठः. ४. 'तस्वस्वा' क. पाठः. ५. 'नेनापि' क. पाठः.

मिति वाच्यम् । पदानां जातावेव शक्तिः । पदज्ञानज(न्यानु-भव?न्य)तावच्छेदकं तु कार्यान्वितानुभवत्वमित्यनुभवानुकूला शक्तिः कार्यान्वित इत्यस्माभिरभ्युपगमात् पदात् पदार्थस्मृतौ न विरोध इति प्राभाकराः ।

अत्र तार्किकाः—प्रवृत्तिलक्षणकार्यानुमितं कार्यताज्ञानं प्रति शब्दस्य हेतुताग्रह इत्यत्र न विवादः । किन्तु पद-ज्ञानज(न्यानुभाव?न्य)तावच्छेदकं कार्यान्वितपदार्थानुभवत्वमे-वेति यदुक्तं, तन्न मृष्यामहे । कार्यवाचिलिङादिपदादेव कार्यांशोपस्थितिसम्भवेन कार्यांशत्यागस्यैवौचित्यात् । न चैवमु-पजीव्यप्राथमिककल्पनाभङ्गप्रसङ्ग एव बाधक इति वाच्यम् । प्राथमिकत्वमात्रेणानुपजीव्यत्वात् । अन्यथेदं रजतमिति भ्रमोत्त-रभाविनो नेदं रजतमिति ज्ञानस्य तदुपजीवकतया तद्बाधक-त्वप्रसङ्गात् ।

किञ्च, त्वया कार्यान्वितज्ञानत्वेन पदज्ञानत्वेन च कार्य-कारणभावो वाच्यः । तथा च सिद्धार्थस्थलेऽपि पदज्ञानरूप-हेतोः सत्त्वात् कार्यान्वितज्ञानं किं न स्यात् । यदि च कार्य-वाचि पदमपि सहकारीत्युच्यते, तर्हि कार्योपस्थापकस्य कार्य-वाचिपदस्य घटाद्युपस्थापकस्य[1] घटादिपदस्य च समाजात् का-र्यान्वितज्ञानमित्यर्थवशसम्पन्नतया न कार्यान्वितज्ञानत्वं का-र्यतावच्छेदकम् । किं बहुना, कार्यार्थस्थल एव व्युत्पत्तिग्रह इति न नियमः । सिद्धार्थस्थलेऽपि प्रथमं तद्ग्रहसम्भवात् ।

---

१. 'स्य च' क. पाठः.

तथाहि — उपलब्धचैत्रपुत्रजन्मा बालस्तादृग्वार्ताहारेण सह चैत्रसमीपं गतः । चैत्र ! पुत्रस्ते जात इति वार्ताहारवाक्यश्रवणसमनन्तरं चैत्रस्य मुखप्रसादं पश्यंश्चैत्रस्य हर्षमनुमाय हर्षं प्रति च पुत्रजन्मज्ञानस्य हेतुत्वं कल्पयाति, पुत्रजन्मज्ञाने च वाक्यस्य हेतुत्वं कल्पयतीति सिद्धः सिद्धार्थे शक्तिग्रह इति दिक् ॥

इति सिद्धार्थवादः ।

अथान्वितशक्तिवादः ।

नन्वेवं यद्यपि कार्यवाचिपदादेव कार्यांशोपस्थितेर्न कार्यान्विते शक्तिः, तथाप्यन्वयांशवाचकपदाभावेनान्वयांशस्यान्यतोऽनुपस्थितेः पदानामितरान्वितस्वार्थे शक्तिरङ्गीकार्या । किञ्च, वृत्त्या पदोपस्थापितस्यैव शा[2]ब्दानुभवविषयत्वनियमादन्वयांशे वृत्तिरवश्यमेष्टव्या । सा च न लक्षणा । अन्वयानुपपत्तिप्रतिसन्धाना[3]द्यनपेक्षणादित्यन्वयांशे शक्तिसिद्धिरिति चेद्, न । प्रकारान्तरलभ्यत्वमेव शक्त्यभावं गमयति, न तु पदान्तरलभ्यत्वमे[4]वं तथा । ततश्च प्रत्येकपदार्थशक्त्या तत्तत्पदार्थेषूपस्थितेषु वृत्तिं विनाप्याकाङ्क्षादिसहकारिवशात् तत्तदर्थान्वितं[5]स्वार्थबोधोपपत्तेः । अन्यथैकस्यैव घटपदस्यानयनाद्यनेकक्रियान्वितस्वार्थबोधकतया तत्तदन्वयांशेऽनन्तशक्तिकल्पनापत्तेः ।

१. 'राद् वा' क. पाठः. २. 'श' क. पाठः. ३. 'नान' क. पाठः. ४. 'व । तत' क. पाठः. ५. 'ते' ख. पाठः.

नन्वन्वयसामान्येऽवश्यं शक्तिरभ्युपेया। अन्यथा घट इत्युक्ते किमानेयः प्रेक्षणीयो वेति संशयजिज्ञासे न स्याताम्। एवमानयेत्युक्ते घटं पटं वेति जिज्ञासादिकं न स्यात्। सामान्यतो ज्ञाते विशेषतश्चाज्ञात एव जिज्ञासाद्युदयात्। तस्मादन्वयसामान्यं पदशक्यमिति चेद्, न। कारकसामान्येन क्रियासामान्यस्य तेन च क्रियासामान्येन कारकसामान्यस्य चाक्षेपेणोपस्थितौ तत्र जिज्ञासादिसम्भवान्न तदर्थमन्वयसामान्ये शक्तिः। अन्यथा चैत्रः समागत इत्युक्ते किं श्यामो गौरो वेति जिज्ञासोदयाद् रूपसामान्येऽपि चैत्रादिपदस्य शक्तिकल्पनापत्तेः। तस्माद् घटादिपदानां तत्तत्पदार्थ एव शक्तिः। आकाङ्क्षादिसहकारिवशादितरान्वयबोध इति दिक्॥

इत्यन्वितशक्तिवादः।

## अथ शक्तिवादः

नन्वेवमन्वयांश इव व्यक्त्यंशेऽपि न शक्तिः। व्यक्तिशक्तिवादिनामपि घटादिपदानां न घटादिव्यक्तिमात्रे शक्तिः, घटादिव्यक्तीनामानन्त्येन शक्तिग्रहणासम्भवात्। किन्तु घटत्वादिविशिष्टे तदवच्छिन्ने[1] वा। ततश्चावश्यकत्वाल्लाघवाच्च घटत्वादावेव शक्तिः। न चैवं धानकर्मत्वस्य महिष्यादिसाधारण्येन धेनुपदस्य गोत्वावच्छिन्ने धानकर्मणि शक्तिरिति भवत्सिद्धान्तविरोधः स्यात्, तत्राप्युक्तरीत्या गोत्व एव शक्त्यापत्तेरिति

---

१. 'न्ने। त' क. पाठः.

वाच्यम् । गोत्वस्य वृषभसाधारण्येन न तत्र गोत्वे शक्तिः, किन्तु, धानकर्मण्येव । गोत्वं त्वतिप्रसङ्गभङ्गाया[1]नुगमाय चावच्छेदकमात्रं कल्प्यते । प्रकृते[2] च बाधकाभावाल्लाघवा[3]दावश्यकत्वाच्च घटत्वादावेव शक्तिः, न व्यक्तौ । न चैवमन्यशक्तात् पदात् कथं व्यक्तिभानम्, अन्यथातिप्रसङ्गादिति वाच्यम् । ज्ञेयस्य ज्ञानवित्तिवेद्यत्ववद् व्यक्तेरपि जातिवित्तिवेद्यता[4]यामनतिप्रसङ्गात् । प्रयोगे[5]श्च — घटपदं न घटशक्तं घटत्वशक्तत्वाद् घटत्वपदवदिति प्राभाकराः ।

अत्र तार्किकाः — अत्र रजतत्वमिति भ्रमे जातिभानेऽपि व्यक्तेरभानान्न जातिवित्तिवेद्यता व्यक्तेः । न च शाब्दबोधे तथा नियम इति वाच्यम् । जातिशब्दाद् व्यक्तेरभानेन तथा नियमाभावात् । न च जातिशब्दोऽपि जातित्व एव शक्तो न तु जाताविति वाच्यम् । जातित्वं हि जातीतरावृत्तित्वे सति जातिवृत्तित्वम् । ततश्च जातेरपि जातित्वघटकतया जातिशब्द[6]शक्यतावश्यंभावात् । न च गोत्वादिजातिविशेषमात्रशक्तपदत्वेन व्यक्त्युपस्थापकतानियमः, जातिशब्दश्च न तादृश इति वाच्यम् । गोत्वादिभिन्नाशक्तत्वे सति गोत्वादिशक्तपदत्वस्य तदर्थतया तदपेक्षया गोत्वादिविशिष्टशक्तपदत्वस्यैव व्यक्त्युपस्थापकतावच्छेदकत्वात् ।

वस्तुतस्तु विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्ते-

---

१. 'याव' क. पाठः. २. 'ते बा' क. पाठः. ३. 'वाच्च' क. पाठः.
४. 'तयान' ख. पाठः. ५. 'जकश्च' ख. पाठः. ६. 'घटकता' क. पाठः.

गामानयेत्यादौ विभक्त्यर्थकर्मत्वादेर्व्यक्त्यन्वयो न स्यात्। त्वन्मते व्यक्तेः प्रकृत्यर्थत्वाभावात्। न चास्मन्मते विभक्तेः प्रकृत्यर्थाश्रयगतस्वार्थबोधकत्वमेव व्युत्पत्तिसिद्धमिति वाच्यम्। त्वन्मते धेनुमानयेत्यत्र विभक्त्यर्थस्य न प्रकृत्यर्थाश्रयेऽन्वयः, गोत्वस्य केवलं तत्र प्रकृत्य(र्था?र्थता)वच्छेदकतया प्रकृत्यर्थत्वाभावात्, किन्तु प्रकृत्यर्थे धानकर्मणीति सर्वत्र लाघवात् प्रकृत्यर्थ एव विभक्त्यर्थान्वयकल्पना। न च सामान्यतया प्रकृतितात्पर्यविषयत्वमेव तदन्वयितावच्छेदकमिति व्यक्तावपि तदन्वयो न विरुद्ध इति वाच्यम्। व्यक्तेः प्रकृतितात्पर्यविषयत्वे तत्र तात्पर्यनिर्वाहकतया वृत्तेरवश्यकल्प्यत्वात्। कल्पनीया च वृत्तिः शक्तिरेव, न लक्षणेति वक्ष्यते। एतेन व्यक्तेरर्थापत्त्यानुमानाद् वोपस्थितिरिति भाट्टमतमपास्तम्। व्यक्तेः प्रकृत्यर्थत्वाभावेन विभक्त्यर्थान्वयानुपपत्तेः। अनुपपत्तिव्याप्त्याद्यप्रतिसन्धानेऽपि व्यक्त्युपस्थितेश्च। तस्माद् व्यक्तौ शक्तिरेष्टव्या[1]।

यत्तु—व्यक्तौ लक्षणैव। अतो न तस्याः प्रकृत्यर्थत्वाभावः। न चैवं शक्यस्यैव गोत्वादेर्लक्ष्यतावच्छेदकत्वापत्तिरिति वाच्यम्। नीलपदे गुणिलाक्षणिके शक्यस्यैव गुणस्य लक्ष्यतावच्छेदकत्ववदिहाप्यविरोधात्। अतो व्यक्तेर्न प्रकृत्यर्थत्वाभाव इति मण्डनमिश्रैरुक्तम्। तदप्यभव्यम्। अन्वयाद्यनुपपत्त्यप्रतिसन्धानेऽपि गोपदाद् गोत्वविशिष्टप्रतीतेः। उत्सर्गतः

[1] 'रेवैष्ट' क. पाठः.

पदज्ञानजन्यस्मृतिविषयत्वरूपं शक्यत्वं व्यक्तावप्यवर्जनीयमिति दिक् ।

एवं गोत्वादिवैशिष्ट्यांशेऽपि शक्तिः स्वीकार्या । विशिष्टस्यैव पदादुत्सर्गतः प्रतीतेः । एवं द्रव्यादिपदादाकृतिविशेषस्याप्रतीतावपि घटादिपदेभ्योऽवयवसंयोगविशेषरूपाया आकृतेर्नियमतः प्रतीतेर्घटादिपदानामाकृतिरपि शक्या । न चैवं व्यक्त्याकृतिजातीनां शक्यत्वे[२] शक्त्यनेकत्वेन नानार्थत्वापत्तिरिति वाच्यम् । जात्याकृतिविशिष्टव्यक्तावेकस्या एव शक्तेः कल्पनात् । न च व्यक्तीनामानन्त्याद् व्यक्तौ कथं शक्तिग्रह इति वाच्यम् । अस्माभिः सामान्यलक्षणाभ्युपगमेन सामान्यलक्षणया सर्वव्यक्त्युपस्थितौ तासु शक्तिग्रहसम्भवात् । तदनभ्युपगमेऽपि गोत्वविशिष्टे शक्तिरिति गोत्वप्रकारेण क्वचिद् व्यक्तौ[३] शक्तिग्रहः । शक्तिग्रहप्रकारेण शाब्दबोधनियमाद् गोत्वप्रकारको व्यक्त्यन्तर[४]विषयकः शाब्दबोध इति न किञ्चिदनुपपन्नम् ।

नन्वेवमपि यथा तीरत्वेनोपस्थिते तीरे शक्यसम्बन्धरूपलक्षणाग्रहणादलक्ष्यमपि तीरत्वं लक्षणाग्रहप्रकारतया पदजन्यस्मृतिविषयः, तथा गोत्वेनोपस्थितायां गवि[५] शक्तिग्रहाच्छक्तिग्रहप्रकारतया गोत्वस्यापि पदात् स्मृत्युपपत्तेर्न गोत्वेऽपि

१. 'यरूपश' क. पाठः. २. 'त्वे ना' क. पाठः. ३. 'क्तेः' क. पाठः. ४. 'न्यतर' क. पाठः. ५. 'वि प्र' क. पाठः.

शक्तिः, किन्तु व्यक्तावेवेति चेद्, न । लक्षणास्थले[1] हि लक्ष्यलक्ष्यतावच्छेदकयोर्नैका लक्षणा सम्भवति[2] । तीरे संयोगस्य तीरत्वे संयुक्तसमवायस्य लक्षणात्वात् । अतस्तत्रागत्या तीरस्मृतौ[3] लक्षणा, तीरत्वस्मृतौ लक्षणाग्रहप्रकारत्वमिति नियामकद्वयं कल्प्यते । प्रकृते तु पदार्थान्तररूपाया ईश्वरेच्छारूपाया वा शक्तेरेकस्या एव विशिष्टस्मृतौ नियामकत्वसम्भवान्न नियामकद्वयकल्पना युक्ता । यथा च तीरत्वेऽपि न लक्षणा, तथा वक्ष्यते । तस्माज्जात्याकृतिविशिष्टायां व्यक्तौ शक्तिरिति दिक् । प्रयोगश्च—घटपदं घटत्वविशिष्टशक्तिमत्[4], उत्सर्गतो घटत्वविशिष्टस्मृतिजनकत्वात्, यन्नैवं तन्नैवम्, यथा पटपदम् ॥

इति[5] शक्तिवादः ।

## अथ योगरूढिवादः ।

एवं पङ्कजपदमुत्सर्गतः पद्मत्वविशिष्टस्मृतिजनकत्वात् पद्मत्वविशिष्टे शक्तमिति न्यायविदः । अत्र मीमांसकाः—किं पद्मत्वविशिष्टस्य स्मृत्यर्थं तत्र शक्तिः कल्प्यते, उतानुभवार्थम् । नाद्यः, उद्‌बुद्धसंस्कारादेव स्मृत्युपपत्तेः । न च नियमतः संस्कारोद्बोधकस्यान्यस्याभावादन्वयव्यतिरेकिणः पङ्कजपदस्यैव तदु-

---

१. 'ले ल' क. पाठः. २. 'तीति ती' ख. पाठः. ३. 'रती' क. पाठः. ४. 'क्तम् । उ' ख. पाठः. ५. 'ति पदश' ख. पाठः.

द्बोधकता वाच्या । पदं च वृत्तिविषयादन्यत्र न संस्कारोद्बोधकमिति पङ्कजपदस्य पद्मत्वविशिष्टे शक्तिरुपेयेति वाच्यम् । शक्तिस्मृतिहेतुसंस्कारोद्बोध एव व्यभिचारेणोक्तनियमाभावात् । न चैवं घटादिपदेऽपि शक्तिर्न स्यात्, तत्रापि संस्कारादेव पदार्थस्मृत्युपपत्तेरिति वाच्यम् । अव्युत्पन्नस्य शाब्दानुभवाभावेन शक्ततया गृहीतस्यैवानुभावकत्वमित्यनुभवार्थं तत्र शक्त्यवश्यंभावात् । नन्वस्तु तर्ह्यत्राप्यनुभवार्थं शक्तिरिति द्वितीयः पक्ष इति चेद्, न । पद्मत्वविशिष्टस्मृतिसहकृतावयवशक्त्यैव पङ्कजनिकर्तृ पद्ममित्यन्वयानुभवोपपत्तेः । नन्वेवं स्मृत्युपस्थितं तीरमादाय घोषादिपदैरेवान्वयानुभवसम्भवात् तीरे वृत्तिकल्पना न स्यात् । तस्माद् वृत्तिविषयस्यैवान्वयानुभवविषयतेति तीरे यथा वृत्तिकल्पना, तथा पद्मत्वविशिष्टेऽप्यनुभवार्था शक्तिरेष्टव्येति चेद्, न । लाक्षणिकस्थले ह्यनुभवार्था न वृत्तिः । किन्तु तीरस्य प्रकृत्यर्थत्वाभावे विभक्त्यर्थस्याधारत्वस्य तीरेऽन्वयबोधो न स्यात् । विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेः । अतस्तत्र विभक्त्यर्थान्वयार्थमेव वृत्तिकल्पना, नानुभवार्थम् । नन्वस्तु तर्ह्यत्रापि द्वितीयाविभक्त्यर्थस्य कर्मत्वस्य पद्मान्वयार्थं तत्र शक्तिरिति चेद्, न । पद्मस्यापि पङ्कजनिकर्तृतया प्रकृतिभूतडप्रत्ययार्थतया (च) तदर्थं शक्तेरकल्पनीयत्वात् । तस्माच्च पद्मत्वविशिष्टे शक्तिरित्याहुः ।

---

१. 'षु' क. पाठः. २. 'वान्' ग. पाठः. ३. 'क्तेः क' क. पाठः. ४ 'त् । न तु तस्मात् प' क. पाठः.

अत्रोच्यते — पदविशेषजन्यपदार्थोपस्थितिरेवान्वयबोधाङ्गम् । अन्यथा घटः कर्मत्वमित्यादावप्यन्वयबोधापत्तेः। किञ्च, वृत्त्या पदा[1]दनुपस्थितस्याप्यन्वयबोधविषयत्वे[2] आकाशपदे शक्तिर्न स्यात् । समवायसम्बन्धेनाकाशशब्दादुपस्थितस्याप्याकाशस्यान्वयबोधविषयत्वसम्भवात् । ततश्चान्वयबोधविषयपदार्थस्मृतेः वृत्त्या पदजन्यत्वनियमात् पङ्कजमानयेत्यादौ नियमतोऽन्वयबोधविषयपद्मत्वविशिष्टस्मृतिरपि वृत्त्या पङ्कजपदजन्या वाच्येति पङ्कजपदस्य पद्मत्वविशिष्टे शक्तिरवर्जनीया । न चानादिप्रयोगरूपसम्बन्धादुपस्थित[3]स्यैवान्वयबोधविषयत्वमस्त्विति न तत्र शक्तिकल्पनमिति वाच्यम् । एवं सति घटादिपदेऽपि शक्तिर्न स्यात् । वस्तुतस्तु सादिदेवदत्तादिपदे सङ्केतस्यैव पदसम्बन्धत्वकल्पनात् प्रकृतेऽपीश्वरसङ्केत एव सम्बन्ध इति पद्मत्वविशिष्टे शक्तिसिद्धिरिति दिक् ।

केचित्तु पद्मत्वविशिष्टे लक्षणास्तु । पङ्कजनिकर्तृत्वरूपशक्यसम्बन्धसत्त्वात् । वृत्तिद्वयविरोधस्य मणिकृन्मते दोषत्वाभावात् । न च वादिवाक्यात् पद्मत्वविशिष्टप्रतीतिर्न स्यादिति वाच्यम् । तर्हि निरूढलक्षणास्तु । अत एवान्वयानुपपत्त्याद्यप्रतिसन्धानेऽपि तत्प्रतीतिर्न विरुद्धा । न चैवं कुमुदे लाक्षणिकः प्रयोगो न स्यादिति वाच्यम् । निरूढलाक्षणिकस्यापि द्विरेफादिपदस्य 'तस्याः कुन्तलो द्विरेफ' इत्यन्यत्र लाक्षणिकप्रयोगदर्शनादित्याहुः ।

---

१. 'दानु' क. पाठः. २. 'त्वेनाका' ख. पाठः. ३. 'स्थिते त' क. पाठः.

अन्ये तु पङ्कजमानयेत्यत्र न कुमुदादिसाधारणयोगार्थान्वयधीरिति न विवादः । तत्र यदि पद्मत्वविशिष्टे शक्तिर्न स्यात्, तदा कुमुदादिसाधारणी योगार्थप्रतीतिरनिवार्येति तन्निवृत्त्यर्थं पद्मत्वविशिष्टे समुदायशक्तिरङ्गीकार्या । तथात्वे त्वेकपदोपात्तत्वप्रत्यासत्त्या योगार्थावच्छिन्न एव रूढ्यर्थो भासत इति न कुमुदादिसाधारणप्रतीतिः ।

नन्वेवमपि[1] यत्र कुमुदतात्पर्येणैव पङ्कजपदं प्रयुक्तं, तत्र कुमुदत्वप्रकारकप्रतीतिर्वृत्तिं विनानुपपन्नत्वेन समुदायस्य कुमुदे लक्षणायामपि योगार्थस्य लक्षणोपस्थितेन कुमुदेनावयवशक्त्यैवान्वयप्रतीतिसम्भवान्नावयवार्थे[2] लक्षणा कल्प्येत[3] । न चेष्टापत्तिः, अपसिद्धान्तादिति चेद्, न । यथा गङ्गायां घोष इत्यत्र गङ्गापदस्य तीरपरत्वज्ञानेऽपि गङ्गापदात् प्रथमं प्रवाहस्मृतिः, ततः शक्यसम्बन्धज्ञानात् तीरस्मृतिः । तथात्रापि कुमुदपरत्वज्ञानेऽपि प्रथमं पङ्कजपदाद् रूढ्या पद्मत्वविशिष्टस्मृतिः, ततः शक्यसम्बन्धज्ञानात् कुमुदधीः । अतः प्रथममुपस्थितेन पद्मत्वविशिष्टेन योगार्थान्वयात् पश्चात् कुमुदान्वयार्थं स्वतन्त्रोपस्थितये योगार्थेऽपि लक्षणावश्यकी । न च वाक्यलक्षणानङ्गीकारात् कावयवार्थे लक्षणेति वाच्यम् । डप्रत्यय एव लक्षणास्वीकारात् । पङ्कजपदस्य तात्पर्यग्राहकत्वेनावैयर्थ्यात् । न च शक्यस्यैव लक्ष्यत्वं विरुद्धमिति वाच्यम् । गौर्नित्येत्यत्रेव शक्यस्यापि लक्ष्यत्वाविरोधात् । पङ्कजकुमुदमानयेत्यत्रापि समुदायशक्त्या झटि-

१. 'वै' ख. पाठः. २. 'र्थे' क. पाठः. ३. 'ल्प्यते । न' ख. पाठः

ति स्मृतेन पद्मत्वविशिष्टेनैवैकपदोपात्तत्वप्रत्त्यासत्त्या योगार्थान्वयात् कुमुदान्वयार्थं लक्षणावश्यकी। न च कुमुदसमभिव्याहारेण प्रतिबन्धान्न तत्र पद्मत्वविशिष्टस्मृतिरिरिति वाच्यम्। समभिव्याहारादेः पद्माद्यन्वयानुभवप्रतिबन्धकत्वेऽपि स्मृतावप्रतिबन्धकत्वस्य वक्ष्यमाणत्वात्। स्थलकमलतात्पर्यके तु पङ्कजपदे योगार्थस्यायोग्यतयानन्वयात् समुदायशक्त्यैव पद्मत्वविशिष्टप्रतीतिरिरिति दिगित्याहुः।

वस्तुतस्तु ग्राह्याभावानवगाहिनोऽपि जनकज्ञानाविघटकस्यापि[2] रूढिज्ञानस्य, सिद्धेरनुमिताविवासाधुत्वज्ञानस्य शाब्दज्ञान इव च योगार्थज्ञाने प्रतिबन्धकत्वमेष्टव्यम्। अत एव 'वर्षासु रथकार आदधीते'त्यत्र रथकारपदरूढ्यर्थजातिविशेषमात्रस्याधानेऽधिकारो, न तु योगार्थरथकर्तृत्वविशिष्टस्य, रूढ्या प्रतिबन्धेन योगार्थस्याभानात्। तस्मात् पद्मपरत्वेऽपि[3] न योगार्थभानमित्याहुः।

ननु सिद्धेरनुमितिजनकीभूतपक्षताघटकसंशयरूपज्ञानविघटकतयैव प्रतिबन्धकत्वम्। असाधुत्वज्ञानस्यापि शाब्दधीजनकसाधुत्वज्ञानविघटकतयैव प्रतिबन्धकत्वम्। अतो रूढिज्ञानस्य साक्षादविरोधिनो जनकज्ञानाविघटकस्य न योगार्थप्रतिबन्धकतेति चेद्, न। अनुमितौ घनगर्जितस्थलादावभावेन सन्दिग्धसाध्यकत्वरूपपक्षताहेतुत्वनिरासात्। व्याकरणमजान-

---

१. 'त्वस्मृ' ख. पाठः. २. 'पि ज्ञा' क. पाठः. ३. 'पि यो' क. पाठः.

तामपि पामराणामपभ्रंशतोऽप्यर्थप्रत्ययस्य सकलानुभवसिद्ध-त्वेन व्याकरणस्मृत्युपगृहीतत्वरूपसाधुत्वज्ञानस्य शाब्दबोधहे-तुत्वाभावाच्च सिद्धेरसाधुत्वनिश्चयस्य च[1] न जनकज्ञाने[2]विघटक-तया[3] प्रतिबन्धकत्वं, किन्तु साक्षादेवेति दिक् ॥

इति योगरूढिवादः

## अथापभ्रंशवादः ।

नन्वपभ्रंशतो व्याकरणस्मृत्यनुपगृहीतत्वरूपासाधुत्वनि-श्चयेऽपि व्युत्पन्नानामर्थप्रतीतिरसाधुत्वज्ञानं प्रतिबन्धकमेव नेति चेद्, न । तत्र साधुशब्दस्मरणादेवान्वयबोध इत्येके । व्याक-रणस्मृतिनिषिद्धत्वमेवासाधुत्वम । तच्च नापभ्रंशेपु । न चैवं साधुभिर्भाषितव्यं नासाधुभिरिति विभागानुपपत्तिरिति वा-च्यम् । व्याकरणस्मृत्युपगृहीतानुपगृहीतपरत्वात् तस्येत्यन्ये । इदं तु ध्येयम् — अपभ्रंशेपूत्सर्गतस्तत्तदर्थप्रतीतिजनकत्वेऽपि न शक्तिः, एकस्यार्थस्यानेकशब्दत्वस्यान्याय्यत्वात । न चैवं घटकलशादिपु पर्यायपदेष्वेकत्रैव शक्तिः स्यादिति वाच्यम् । तत्र विनिगमनाविरहेण सर्वत्र शक्त्यभ्युपगमात् । प्रकृते च सर्वदेशावच्छेदेन संस्कृतशब्दानामैक्यस्य विनिगमकत्वात् । न चैवं प्राकृतादिभाषाशब्दानां सर्वदेशावच्छेदेनैक्यात् तत्रापि

१. 'च ज' ख. पाठः. २. 'ना' ख. पाठः. ३. 'या न प्र' ख. पाठः. ४. 'त्युप' ख. पाठः. ५. 'दन्व' क. पाठः.

शक्तिः स्यादिति वाच्यम् । तेषां संस्कृतशब्दज्ञापकतयैवार्थ-प्रत्यायकत्वस्यानुभवसिद्धत्वेन तेषु शक्त्यकल्पनात्[1] । न चैव-मपभ्रंशादर्थप्रतीत्यनुपपत्तिरिति वाच्यम् । शक्तिभ्रमात् तदुप-पत्तेः । तथाहि — व्युत्पन्नं प्रति केनचिद् गोशब्दे प्रयोक्तव्ये करणापाटवाद् गावीशब्द उच्चारिते तेन गोशब्दमनुमायार्थं प्रतीत्य व्यवहृते तद्व्यवहारदर्शिना बालेन* गावीशब्दे शक्ति-भ्रमात्[2] तदुत्तरोत्तरभ्रमपरम्परोपपत्तेरिति दिक् ।

अत्र केचित् — अनन्तासु भाषास्वनन्तेषु शब्देष्वेवं शक्तिभ्रमपरम्पराकल्पनमयुक्तम् । तथा सति विदुषां ततोऽर्थप्र-त्ययो न स्यात् । प्रत्यपशब्दं संस्कृतशब्दस्मरणकल्पनं[3] चाननु-भवपराहतम् । किञ्च, अस्माच्छब्दादयमर्थ[4] उत्सर्गतो बोद्धव्य इतीश्वरेच्छाविषयत्वं शक्तत्वम्[5] । तच्चापभ्रंशेष्वप्यक्षतम्[6] । तस्याः सर्वविषयत्वात् । न च वायौ रूपसमवायसत्त्वेऽपि यथा[7] तत्र तस्य सम्बन्धत्वं न कल्प्यते, तथापभ्रंशेष्वीश्वरेच्छासत्त्वेऽपि तस्यास्तत्र न सम्बन्धत्वकल्पनमिति वाच्यम् । ततोऽर्थप्रतीते-रबाधितत्वेन तत्र तस्याः सम्बन्धत्वा[8]कल्पनस्या[9]युक्तत्वात् । अतः केषाञ्चिच्छक्तिभ्रममूलकत्वसम्भवेऽपि न सर्वेषां तन्मूलकत्वमि-त्याहुः ॥

इत्यपभ्रंशवादः ।

---

१. 'क्ति' क. पाठः. २. 'मादु' ख. पाठः. ३. 'नमन' क. पाठः. ४. 'यमुत्स' क. पाठः. ५. 'क्य' ख. पाठः. ६. 'ष्वक्ष' क. पाठः. ७. 'थात्र स' क. पाठः. ८. 'त्व' क. पाठः. ९. 'स्य' क. पाठः.

* 'बालस्य' इति पाठ्यं भाति, तद्विशेषणमपि षष्ठ्यन्तम् ।

## अथेश्वरेच्छावादः ।

ननु पदपदार्थयोः स्वरूपमेव सम्बन्धोऽस्तु, किमीश्वरेच्छापर्यन्तधावनेनेति चेद्, न । गुणगुणिसम्बन्धवत् पदपदा[1]र्थसम्बन्धस्यापि लाघवादेकत्वसिद्धौ[2] लोके डित्थादिपदसङ्केतस्येच्छानुविधायित्वदर्शनाद् घटादिपदसङ्केतस्यापीश्वरेच्छानुविधायित्वकल्पनात् । नन्वेवं नैयायिकस्येश्वरेच्छारूपशक्तिज्ञानमर्थप्रत्यायकम् । मीमांसकस्य तु पदार्थान्तररूपशक्तिज्ञानमिति परस्परव्यभिचारान्न तयोरर्थप्रत्यायकत्वं, किन्तु तज्ज्ञानजनक[3]त्वज्ञानस्यैव । न च सम्बन्धं विना[4] तज्ज्ञानजनकत्वज्ञानमेव न सम्भवतीति वाच्यम् । तज्ज्ञानजनकत्वेन ज्ञातत्वस्यैव सम्बन्धत्वात् । पूर्वपूर्वतद्धीजनकत्वज्ञानादुत्तरोत्तरतद्धीजनकत्वज्ञानसम्भवात् । न च सादिदेवदत्तादिपदे पूर्वपूर्वतद्धीजनकत्वज्ञानासम्भवादस्मादयमर्थो ज्ञातव्य इति सङ्केतज्ञानस्यैव हेतुतया लाघवात् पदमात्रे तस्यैव हेतुत्वमिति वाच्यम् । अस्मात् पदादयमर्थो ज्ञातव्य इति ज्ञानकाले अर्थे पदजन्यज्ञानविषयत्वसमानवित्तिवेद्यतया पदेऽप्यर्थज्ञानजनकत्वस्यापि भानेन सादिपदेऽपि तज्ज्ञानजनकत्वज्ञानसम्भवादिति चेद्, न । तज्ज्ञानजनकत्वेन ज्ञातत्वस्यैव पदसम्बन्धत्वे शक्तिभ्रमादर्थप्रत्ययः क्वापि न स्यात् । अर्थप्रत्यये तद्धीजनकत्वेन ज्ञातत्वरूपपदसम्बन्धावश्यम्भावात् । किञ्च, लिङ्गमपि तद्धीजनकत्वेन

१. 'पदा' ख. पाठः. २. 'क्वसि' ख. पाठः. ३. 'कत्वस्यै' ख. पाठः.
४. 'ना पूर्वपूर्वत' क. पाठः.

ज्ञातमनुमापकमिति किं व्याप्त्या । यदि च सम्बन्धं विना तद्बीजनकत्वमेवं[1] न सम्भवतीति व्याप्तिकल्पना, तदा शक्तावपि दीयतां दृष्टिः । यदपि परस्परं[2]व्यभिचार इति, तन्न । नहीश्वरेच्छात्वेन पदार्थान्तरत्वेन[3] वा तज्ज्ञानं हेतुरिति ब्रूमः । किन्तु शाब्दानुभवजनकतावच्छेदकधर्मवदिदं पदमिति सम्बन्धभानमेव हेतुरित्यङ्गीकुर्म इति न कस्यापि मते व्यभिचार इति दिक् ॥

इति ईश्वरेच्छावादः ।

## अथ लक्षणासमर्थनम् ।

एवं शक्तिवच्छक्यसम्बन्धरूपा लक्षणाख्या वृत्तिरप्येष्टव्या[4] । अन्यथा गङ्गायां घोष इत्यादौ गङ्गादिपदात् तीराद्युपस्थित्यनुपपत्तेः । न च गङ्गापदात् शक्त्या[5] प्रवाहोपस्थितौ तेन तत्सम्बन्धितीरस्मृतिः सम्भवतीति वाच्यम् । घटः कर्मत्वमानयनं कृतिरित्यत्रान्वयबोधाभावेन पदविशेषजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गत्वात् तीरस्मृतेरपि गङ्गापदजन्यत्वाय तत्र वृत्तेरभ्युपेयत्वात् । किञ्च, तीरस्य गङ्गापदार्थत्वाभावे तीरे गङ्गायामिति सप्तम्यर्थाधारत्वान्वयो न स्यात् । विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेः । न च प्रकृतितात्पर्यविषयेऽर्थे विभक्त्यर्थान्वय इति वाच्यम् । परम्परया वह्नितात्पर्यके धूमोऽस्तीति वाक्ये विभक्त्यर्थस्य[6] वह्न्यन्वयबोधापत्तेः, गङ्गापदस्य तीरतात्प-

१. 'व स' क. पाठः. २. 'रस्य व्य' क. पाठः. ३. 'र्थत्वे' ख. पाठः. ४. 'रेष्ट' ख. पाठः. ५. 'क्य' क. पाठः. ६. 'स्यान्व' ख. पाठः.

र्यैकत्वे तात्पर्यनिर्वाहकतया तीरे वृत्तिकल्पनावश्यम्भावाच्च । तस्माद् गङ्गापदस्य तीरे शक्यसम्बन्धरूपा वृत्तिरवश्यमेष्टव्या । नन्वेवं गङ्गापदस्य तीरे शक्तिरेवास्तु, ईश्वरेच्छारूपायास्तस्या एकत्वात्, पदपदार्थसम्बन्धत्वेनान्यत्र क्लृप्तत्वात् । जगत्कारणतया तीरस्मृतिहेतुत्वस्यापि सिद्धतया पदपदार्थसम्बन्धत्वेनापि तस्या एव पदार्थस्मृतिहेतुत्वकल्पनौचित्याच्च । न तु शक्यसम्बन्धरूपा लक्षणा कल्प्या । सम्बन्धस्य संयोगसंयुक्तसमवायादिभेदेन स्वरूपतोऽप्यनेकत्वात्, पदसम्बन्धत्वेनान्यत्राक्लृप्तत्वाच्चेति चेद्, न । एवं सति गङ्गापदस्य कदाचिद् घटादिपरतयापि[1] प्रयोगसम्भवेन विश्वमात्रशक्तता स्यादिति गतं शक्याशक्यविवेकेन, समागतं च तीरादावपि शक्तिग्राहकवृद्धव्यवहाराद्यपेक्षया । किञ्च लक्षणास्थलेऽन्वयाद्यनुपपत्तिप्रतिसन्धानमपि न स्यात् । तस्माच्छक्यसम्बन्धस्याक्लृप्तमपि पदसम्बन्धत्वमवश्यं[2] कल्पनीयम् । ननु प्रवाहसम्बन्धस्य पुरुषादिसाधारण्यान्न शक्यसम्बन्धो[3] लक्षणा । न च शक्याविनाभावसम्बन्धो लक्षणा, यष्टीः प्रवेशयेत्यादावपि प्रवेशसमये यष्टिधारिणां[4] यष्ट्यविनाभावसम्भवादिति वाच्यम् । अविनाभावस्यापि मत्स्यादिसाधारण्येनातिप्रसङ्गादिति चेद्, न । प्रकरणादेस्तात्पर्यनियामकत्वेनातिप्रसङ्गाभावात् ।

नन्वेवमक्षादिपदेष्वपि एकत्रैव शक्तिरन्यत्र लक्षणेति

१. 'ति श' क. पाठः. २. 'श्यक' क. पाठः. ३. 'क्ति' क. पाठः. ४. 'रा' ख. पाठः.

स्यादिति चेद्, न। तत्र तुल्यवदुभयत्र प्रयोगाद् विनिगमना-विरहेणोभयत्रापि शक्तिरिति नानार्थता। नानाशक्त्या नाना-प्रकारकोपस्थितिजनकत्वस्यैव नानार्थत्वात्। न चैवं सर्वना-म्नामपि नानाशक्त्या बुद्धिस्थघटत्वादिनानाप्रकारकज्ञानजनक-तया नानार्थतापत्तिरिति वाच्यम्। इष्टत्वादित्येके। बुद्धिस्थ-त्वाद्युपाधिं विनेत्यपि विशेषणान्न सर्वनामस्वातिव्याप्तिरित्यपरे। सर्वनाम्नां सर्वत्रैकैव शक्तिः। न चैवं पुष्पवन्तादिपदस्य[1] युग-पद्दिवाकरत्वनिशाकरत्वोभयप्रकारकप्रतीतिजनकत्ववद् युगपद् घटत्व[2]पटत्वादिसर्वप्रकारकप्रतीतिजनकत्वापत्तिरिति वाच्यम्। व्युत्पत्तिवैचित्र्याद् बुद्धिस्थमात्रप्रकारकप्रतीतिजननोपपत्तेः। अत एवानेकेषां बुद्धिस्थत्वे युगपदनेक[3]प्रकारकप्रतीतिजनकत्वमिति नानाशक्त्यभावान्न नानार्थतेत्यन्ये। एवं सत्यक्षादिपदानामपि दुरोदरादिष्वेकैव शक्तिः। व्युत्पत्तिवैचित्र्यात् तात्पर्यविषय-मात्रप्रकारकज्ञानजनकत्वम्। अत एवानेकेषां तात्पर्यविषयत्वे युगपदनेकप्रकारकज्ञानजन[4]कत्वमित्यक्षादिपदानामपि नानार्थता न स्यादित्यपरे। एवं सिंहो माणवक इत्यत्रापि शक्यसादृश्य-रूपसम्बन्धात् सिंहशब्दस्य माणवके लक्षणा। न चैवं गौण-लाक्षणिकविभागो न स्यादिति वाच्यम्। सादृश्यान्यशक्य-सम्बन्धो लक्षणा। सादृश्यात्मकशक्यसम्बन्धो गौणीति तयो-र्भेदात्। एवं गामुच्चारयेत्यादौ गवादिपदानां स्वपरत्वे लक्षणा। स्वशक्येन स्वस्य वाच्यवाचकभावलक्षणसम्बन्ध[5]सत्त्वात्। न च

१. 'दा' क. पाठः. २. 'त्वादि' क. पाठः. ३. 'कप्रती' क. पाठः. ४. 'ननमि' क. पाठः. ५. 'न्धत्वा' क. पाठः.

शक्तिरूपसम्बन्धस्यार्थ इव स्वस्मिन्नप्यविशेषाच्छक्त्यैव स्वोपस्थितिः किं न स्यादिति वाच्यम् । शक्तेः स्वविषयमात्रोपस्थापकत्वस्वाभाव्येन स्वाश्रयीभूतपदोपस्थापकत्वाभावात्। अन्यथा शक्त्याश्रयतया पदमात्रादीश्वरोपस्थितिप्रसङ्गात्। कथञ्चित् स्वनिष्ठशक्त्या स्वोपस्थितावपि[1] तस्य शक्तिविषयत्वरूपे[2]प्रकृत्यर्थत्वाभावाद् विभक्त्युपस्थाप्यकर्मत्वादेर्गोपदान्वयो न स्यात् । स्वे[3]विभक्तेः प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेः । अतः प्रकृत्यर्थतासिद्धये तत्र लक्षणावृत्तिरुपेया ।

ननु गङ्गापदलक्षणया किं तीरत्वेनोपस्थितिः, किं वा गङ्गातीरत्वेनोपस्थितिः। नाद्यः, यमुनातीरस्याप्यन्वयबोधापत्तेः। द्वितीये वृत्तिद्वयविरोधः, तीरांशे लक्षणाया गङ्गांशे शक्तेश्चाङ्गीकारादिति चेद् , न। वस्तुतो गङ्गातीरमेव तीरत्वेन प्रतीयत इत्येके। गङ्गातीरत्वेनैव प्रतीतिः, गङ्गायां मत्स्यघोषावित्यत्रेव वृत्तिद्वयसमावेशस्यादोषत्वादित्यपरे ॥

इति लक्षणासमर्थनम्।

---

## अथ लक्ष्यतावच्छेदके लक्षणानिरासः।

इदं तु ध्येयम्—लक्ष्यतावच्छेदकतीरत्वादौ न लक्षणा, तीर इव तीरत्वे शक्यसंयोगरूपसम्बन्धाभावात्। न च तथापि तत्र संयुक्तसमवायात्मकशक्यसम्बन्धसत्त्वाद् भिन्नैव

---

१. 'पि श' ख. पाठः. २. 'पाविभक्त्यर्थान्वयितावच्छेदकाभा' क. पाठः. ३. 'सुब्विभ' ख. पाठः.

लक्षणास्त्विति वाच्यम् । तथा सति तत्र तीरत्वत्वस्य[1] लक्ष्यतावच्छेदकत्वेन तत्प्रकारकप्रतीत्यापत्तेः, तत्राप्युक्तरीत्या लक्षणापत्त्यानवस्थानात् । न च तीरे तीरत्वं, तीरत्वे च तीरमेव लक्ष्यतावच्छेदकमिति वाच्यम् । तथा सत्युभयप्रकारकोभयविशेष्यकप्रतीत्यापत्तेः । न चैवं लक्ष्यतावच्छेदकस्य पदादुपस्थितिर्न[2] स्यादिति वाच्यम् । तीरत्वेनोपस्थिते शक्यसम्बन्धग्रहाद् 'यद्धीर्येन विना न भासते, तद्भासकस्य तद्भासकत्वनियमादि'ति न्यायेन तीरलक्षणयैव तदुपस्थित्युपपत्तेः । स्ववृत्त्युपस्थापितत्वस्य गौरवेणान्वयबोधातन्त्रत्वात् । शक्यतावच्छेदके च विशिष्टगोचरैकशक्त्या विशिष्टोपस्थितिसम्भवान्न यद्धीरित्यादिन्यायकल्पनमिति दिक् ॥

इति लक्ष्यतावच्छेदके लक्षणानिरासः ।

### अथ लक्षणाद्वैविध्यसमर्थनम् ।

इयं तु लक्षणा द्विविधा — जहल्लक्षणाजहल्लक्षणा चेति । यत्र शक्यार्थस्य न वाक्यार्थान्वयः, तत्र जहल्लक्षणा । यथा गङ्गायां घोष इत्यादौ । यत्र तु शक्यस्यापि वाक्यार्थान्वयः, तत्राजहल्लक्षणा । यथा छत्रिणो गच्छन्तीति । न चोत्र छत्रीति न प्रकृतिप्रत्ययसमुदाये लक्षणा, वाक्यलक्षणानङ्गीकारात् । नापिच्छत्रपदे छत्र्यच्छत्रिसमुदाये लक्षणा । तथा सतिच्छत्रस्य

---

1. 'त्वस्य' ख. पाठः. 2. 'च न' क. पाठः.

वाक्यार्थानन्वयेन जहत्स्वार्थतापत्तेरिति वाच्यम् । छत्रपद एव-च्छत्रच्छत्र्यच्छात्रित्रितयसमुदाये लक्षणाङ्गीकारेण जहत्स्वार्थ-त्वाभावादित्याहुः ॥

इति लक्षणाद्वैविध्यसमर्थनम् ।

## अथ लाक्षणिकानुभावकत्ववादः ।

लाक्षणिकं पदमप्यन्वयप्रतियोग्युपस्थापकतयान्वयानु-भावकम् । न च शक्तिमत्पदत्वमेवानुभवजनकतावच्छेदकम् । अशक्यान्वयबोधस्तु पदानामितरान्वितस्वार्थानुभावकत्वव्युत्पत्तेः पदान्तरेणैवोपपन्न इति वाच्यम् । तदपेक्षया वृत्तिमत्पदत्व-स्यैव सामान्यतया लघुत्वादिति केचित् । वृत्तिमत्त्वं हि शक्ति-लक्षणान्यतरवत्त्वम् । तदपेक्षया शक्तिमत्त्वमेव लघु । सामान्य-विशेषयोस्तुल्यशरीरत्व एव सामान्ये प्रमाणपक्षपातादितरत्र शरीरलाघवस्यैव बलीयस्त्वात् । अत एवाख्यातवाच्यतावच्छे-दकं यत्नत्वं, न तु सामान्यमपि व्यापारत्वमिति सिद्धान्तः । न च वृत्तित्वं न शक्तिघटितं, किन्तु अन्वयप्रतियोग्युपस्थित्य-नुकूलपदपदार्थसम्बन्धत्वमेवेति वाच्यम् । तदपेक्षयापि पदप-दार्थसम्बन्धतापन्नेश्वरेच्छात्वरूपशक्तित्वस्य लघुत्वात् । न च शक्तिमत्त्वेनानुभावकत्वेऽपभ्रंशतोऽनुभवो न स्यादिति वाच्यम् । तावता शक्तिमत्त्वेन ज्ञातत्वस्यैवानुभवजनकतावच्छेदकतास्तु,

---

१. 'मन्व' क. पाठः.

तस्माल्लाक्षणिकं[2] नानुभावकम् । न चैवं नीलो द्विरेफ इत्यादौ यत्र पदद्वयमपि लाक्षणिकं, तत्र कथमन्वयानुभव इति वाच्यम् । तत्रापि विभक्तेरेवेतरपदार्थान्वितस्वार्थान्वयानुभावकत्वसम्भवादित्यन्ये। वस्तुतस्तु शक्तं पदमनुभावकमिति सत्यम्। न तु तत् स्वशक्तिविषयमात्रानुभावकं, गौरवात् । न चातिप्रसङ्गः । यत्पदशक्तिः साक्षात्परम्परौदासीन्येन यत्पदार्थोपस्थित्यनुकूला, तत्पदं तदर्थानुभावकमित्यङ्गीकारात् । न चैवं शक्त्युपस्थितेन प्रवाहेण स्मृतस्यापि तीरस्य गङ्गापदादन्वयबोधविषयतापत्तिरिति गतं लक्षणयेति वाच्यम् । पदविशेषजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गत्वेन लक्षणावश्यकीत्युक्तत्वात्। अतो लाक्षणिकमप्यनुभावकमिति दिक् ॥

इति लाक्षणिकानुभावकत्ववादः ।

## अथ तात्पर्यज्ञानस्य लक्षणाबीजत्ववादः ।

तात्पर्य[3]ज्ञानं च लक्ष्यान्वयबोधहेतुः । तस्य नानार्थस्थले विनिगमनान्यथानुपपत्त्या हेतुत्वे कल्प्यमाने लाघवेन शाब्दबोधमात्रहेतुत्वकल्पनात् । न च लक्षणास्थले लक्ष्यतात्पर्यधीहेतुत्वेनावश्यकत्वादन्वयानुपपत्तिज्ञानमेव लक्ष्यान्वयबोधहेतुरिति वाच्यम् । शब्दादिनापि लक्ष्यतात्पर्यधीसम्भवेन तदुपजी[4]व्यत्वमिति नियमाभावात् । यष्टीः प्रवेशयेत्यत्रान्वयानुपप-

१. 'न्न ला' ख. पाठः. २. 'कमनु' ख. पाठः. ३. 'र्यानुभावकं च' ख. पाठः. ४. 'वि' ख. पाठः.

स्यभावाच्च । न च तत्रा[1]पि प्रवेशयेत्यस्य प्रकरणादिना भोक्तृप्रवेशपरत्वावसायादस्त्[2]यन्वयानुपपत्तिज्ञानमिति वाच्यम् । तर्हि तत्रान्वयानुपपत्तिधीहेतुत्वेनावश्यकत्वात् तात्पर्यज्ञानमेव हेतुः । किञ्च यत्र यष्टिपद एव यष्टिधरपरत्वमवसितं, न प्रवेशयेत्यस्य प्रवेशविशेषपरत्वं, तत्रैव व्यभिचारान्नान्वयानुपपत्तिज्ञानं तत्र हेतुः[3], किन्तु क्वचित् तात्पर्यज्ञानहेतुतया प्रयोजकमात्रम् । किञ्च घोषपदस्य मत्स्यादिलक्षणायामप्यनुपपत्तिशान्तेर्गङ्गापदमेव लक्षक[4]मिति न स्यात् । अतो लक्षकपदनियमार्थमपि तात्पर्यज्ञानं हेतुः । तथा घोषाधारतायोग्यगङ्गासम्ब[5]न्धिनिबिडद्रव्यान्तरलक्षणयाप्यनुपपत्तिशान्तेस्तीररूपलक्ष्यनियमार्थमपि तात्पर्यज्ञानं लक्षणास्थलीयान्वयबोधहेतुरिति दिक् ॥

इति तात्पर्यज्ञानस्य लक्षणाबीजत्ववादः ।

---

## अथ रूढिपूर्वलक्षणावादः ।

अत्र मीमांसकाः—सर्वत्र तात्पर्यज्ञानमेव लक्ष्यार्थानुभवहेतुरित्ययुक्तं, क्वचिदन्वयानुपपत्तेरपि तद्धेतुत्वात् । तथाहि—यद्यपि मण्डपं भोज[6]येत्यादौ मण्डपानकर्तृरूपयोगार्थ एव प्रकरणादिसाहित्यं, तत्र योगार्थस्यैव शीघ्रमुपस्थित्या भोजना-

१. 'त्र प्र' क. पाठः. २. 'स्त्व' क. पाठः. ३. 'तुः, क्व' ख. पाठः. ४. 'कं न' क. पाठः. ५. 'न्धिद्र' क. पाठः. ६. 'येदिला' क. पाठः. ७. 'ग्या' क. पाठः. ८. 'त्यान्वयबोधान्न' क. पाठः.

न्वयान्न लक्षणावकाशः, तथापि मण्डपं पश्येत्यादौ[1] यत्र रूढ्य-र्थयोगार्थयोरुभयोरपि प्रकरणादितौल्यं, यत्र वानेकत्रापि प्रकर-णादिकं, तत्र सर्वत्रापि पदार्थतया रूढ्यर्थस्यैव शीघ्रमुपस्थितिः, योगार्थस्य वाक्यार्थतयाकाङ्क्षादिसापेक्षतया विलम्बितोपस्थि-तिरित्यविवादम्। तथा च मण्डपं भोजयेत्यत्रो[2]भयत्रापि प्रक-रणा[3]द्यभावे रूढ्यर्थस्य गृहविशेषस्यैव शीघ्रमुपस्थित्या तस्य भोजनान्वयानुपपत्तिज्ञानमात्रादेव गृहविशेषसम्बन्धिनि लक्ष-णेति सर्वत्र न तात्पर्यज्ञानं लक्षणाबीजमित्याहुः।

अत्र तार्किकाः—रूढ्यर्थस्यान्वयानुपपत्तिज्ञाने सत्य-वयवशक्त्योपस्थितस्य योगार्थस्य लक्षणां विनैवान्वयबोधः स्या-दिति कुतस्तत्रान्वयानुपपत्तिज्ञानमात्राल्लक्षणा। न च तत्र रूढ्यर्थस्मृतेरवयवशक्त्या योगार्थस्मृतिप्रतिबन्धकतया लक्षणै[4]-यैव तत्र योगार्थभानमाश्रयणीयामिति वाच्यम्। रूढ्यर्थान्वया-नुभवस्यै[5]व योगार्थभानप्रतिबन्धकत्वात्, तस्य तत्राभावात्। न च लाघवाद् रूढ्यर्थज्ञानत्वेनैव योगार्थज्ञानप्रतिबन्धकत्व-मिति वाच्यम्। रूढ्यर्थान्वयानुभवस्य साक्षादविरोधिनो जन-कीभूताकाङ्क्षाज्ञानविघटनद्वारा प्रतिबन्धकत्वे सम्भवति ग्रा-ह्याभावानवगाहिनो जनकज्ञानाविघटकस्य च रूढ्यर्थस्मर-णस्य मण्यादिवत् प्रतिबन्धकत्वकल्पनानौचित्यात्। तस्माद् यत्र योगार्थ एव प्रकरणादिकं, तत्र योगार्थस्यैवान्वयधीः। यत्र

---

१. 'दौ रू' ख. पाठः. २. 'येदित्य' क. पाठः. ३. 'णाभा' क. पाठः.
४. 'णैव तत्र न योगार्थभानमि' क. पाठः. ५. 'स्य यो' ख. पाठः.

तु नोभयत्र प्रकरणादिकं, तत्र रूढ्यर्थान्वयानुपपत्तौ तात्पर्यज्ञानाभावे गृहविशेषसम्बन्धिनि न लक्षणा । किन्त्ववयवशक्त्युपस्थितस्य योगार्थस्यान्वयधीर्भवति । तात्पर्यज्ञानसत्त्वे तु गृहविशेषसम्बन्धिनि लक्षणेति सिद्धं तात्पर्यज्ञानस्य लक्ष्यान्व[1]यबोधहेतुत्वम् । एवञ्च यत्र रूढ्यर्थस्य नान्वयानुपपत्तिः पङ्कजमानयेत्यादौ, तत्र योगार्थाभानात् तद्विषय एव रूढेर्योगाप[2]हारित्वप्रवाद इति ध्येयम् । अत एव 'वर्षासु रथकार आदधीते'त्यत्र योगार्थे प्रकरणाद्यभावेन[3] रूढ्यर्थस्यैवोपस्थितेर्जातिविशेषस्यैवाधानेऽधिकारः । ननु 'न शूद्राय मतिं दद्यादि'ति शूद्रस्य वेदपाठनिषेधेन कथं तस्याधानेऽधिकार इति चेद्, न । तस्य सामान्यशास्त्रतया विशेषशास्त्रेण सङ्कोचात् । ननु न शूद्रायेत्यत्र[4] यदि शूद्रपदस्य रथकारातिरिक्तशूद्रपरत्वं, तदा रथकारस्य वेदनिषेधाभावात् सकलवेदाध्ययनाधिकारः स्यात् । यदि च मतिपदमाधानानुकूलवेदातिरिक्त[5]वेदपरं, तदा शूद्रान्तरस्याप्याधानानुकूलवेदाध्ययने दोषो न स्याद् निषेधाभावादिति चेद्, न । यस्य शूद्रस्य यत्कालावच्छेदेन यद्वेदाध्ययनं विशेषविधिविहितं, तदतिरिक्त[6]काले तद्वेदाध्ययनं सर्वदा तद्भिन्नवेदाध्ययनं च शूद्रेण न कर्तव्यमिति निषेधशास्त्रार्थत्वात् । नन्वेवं 'स्वर्गकामो यजेते'ति विशेषविधिबलात् स्वर्गकामातिरिक्तशूद्रविषयकं निषेधशास्त्रमिति किं न स्यादिति चेद्, न ।

---

१. 'क्षणान्व' क. पाठः. २. 'गपरिहारत्व' क. पाठः. ३. 'णाभा' ख. पाठः. ४. 'त्र शू' ख. पाठः. ५. 'क्तप' क. पाठः. ६. 'क्तत' क. पाठः.

स्वर्गकामपदस्य रथकारपदवच्छूद्रे रूढ्यभावेन त्रैवर्णिकपरतयाप्युपपत्तेर्विशेषशास्त्रत्वाभावेन तद्वशान्निषेधशास्त्रस्य स्वर्गकामेतरशूद्रविषयकत्वकल्पनायोगात् । तस्मान्मण्डपं भोजयेत्यत्र गृहाविशेषसम्बन्धिनि तात्पर्यज्ञानं विना न लक्षणेति दिक् ॥

इति रूढिपूर्वलक्षणावादः ।

---

## अथ वाक्यलक्षणानिरासः ।

सा च लक्षणा पदवृत्तिः, वृत्तित्वात् शक्तिवत् । न चाप्रयोजकत्वम्, शक्यसम्बन्धस्यैव लक्षणात्वेन वाक्ये च शक्त्यभावेन शक्यसम्बन्धाभावात् । नन्वेवं गभीरायां नद्यां घोष इत्यत्र गभीरपदे[2] [3] न तीरलक्षणा, तीरे नद्यभेदाभावेन नदीपदानन्वयात् । नापि नदीपदे, तीरे गभीरपदानन्वयात् । अतो गभीरपदनदीपदयोः प्रथमेमन्वयबोधे[4] पश्चाद् घोषान्वयानुपपत्तिज्ञाने सति गभीरायां नद्यामिति वाक्ये गभीरनदीतीरे लक्षणावश्यकी । न च तत्र शक्त्यभावाच्छक्यसम्बन्धात्मिका न लक्षणेति वाच्यम् । शक्यसम्बन्धापेक्षया सामान्यत्वेन लघुतया स्वज्ञाप्यसम्बन्धस्यैव लक्षणात्वौचित्यात् । न चैवं गभीरायां नद्यामिति सविभक्तिकस्य वाक्यस्य लक्षकत्वे विभक्त्यर्थाधारत्वस्य तीरे[5]ऽन्वयो न स्यात् । लक्षकपदशक्यस्य लक्ष्येऽनन्वयादिति

---

१., २. 'म्भी' ख. पाठः. ३. 'दे ती' ख. पाठः. ४. 'मान्व' ख. पाठः. ५. 'रान्व' ख. पाठः.

वाच्यम् । नीलो घट इत्यत्र गुणिलक्षकनीलपदशक्यस्य गुण-स्यै[1] लक्ष्ये गुणिन्यन्वयाद्, वृत्तिद्वयसमावेशस्यादोषत्वे शक्त्यैवा-धारत्वोपस्थितिसम्भवाच्च । न च ज्ञाप्यसम्बन्धस्य लक्षणात्वे लिङ्गतया स्वज्ञाप्यसम्बन्धस्यापि लक्षणात्वं स्यादिति वाच्यम् । तात्पर्ये सतीष्टत्वात् । यद्वा शक्त्या स्वज्ञाप्यसम्बन्धो लक्ष-णा । वाक्ये च शक्त्यभावेऽपि पदशक्त्या स्वज्ञाप्यसम्भवात् । तस्माद् वाक्ये लक्षणावश्यकीति चेद्, न । शक्त्या स्वज्ञाप्य-सम्बन्धत्वापेक्षया शक्यसम्बन्धत्वस्य लघुत्वात्, पदलक्षणयै-वोपपत्तौ पदद्वयात्मकवाक्यलक्षणाया अन्याय्यत्वात् । न च पदलक्षणापक्षेऽपि विनिगमनाविरहेण पदद्वयेऽपि लक्षणा स्यात् । ततो वाक्य एवैका लक्षणेति वाच्यम् । विशेषणविभक्तेः[2] शब्द-साधुत्वार्थकतया विशेषणपदे लक्षणायां विभक्त्यर्थस्य लक्ष्या-नन्वयेन तीरे आधारत्वप्रतीत्यनापत्तेः विशेष्यपद एव लक्षणा-ङ्गीकारात् । न च विशेष्यगतविभक्तेरेवार्थ[3]वत्त्वे[4] किं विनिगम-कमिति वाच्यम् । निर्विशेषणविशेष्यस्थले विशेष्यगतविभक्ते-रर्थवत्त्वावधारणात्[5] । न चैवं नदीपदस्यैव गभीरनदीतीरलक्ष-कत्वे गभीरपदवैयर्थ्यमिति वाच्यम् । तात्पर्यग्राहकतया तद्वै-यर्थ्यात् । तस्माद् वाक्ये न लक्षणा, किन्तु पद एव, तत्रापि विशेष्यपद इति दिक् ॥

इति वाक्यलक्षणानिरासः ।

१. 'स्य गु' क. पाठः. २. 'क्तेः सा' क. पाठः. ३. 'रर्थ' क. पाठः. ४. 'साधुत्वे किं' ख. पाठः. ५. 'साधुत्वाव' ख. पाठः.

अथ बहुव्रीहिलक्षणावादः ।

एवं चित्रगुमानयेति बहुव्रीहौ गोपदस्य चित्रगोस्वामिनि लक्षणा। चित्रपदं तु तात्पर्यग्राहकमिति न्याय्यः[1] पन्थाः। 'अनेकमन्यपदार्थे'(२.२.२४) इति व्याकरणस्मृत्यानेकस्य[2] पदस्यान्यपदार्थे वर्तमानस्य समासानुशासनात् पदद्वयेऽपि लक्षणेति स्थितिः। ननु दधि पश्येत्यत्र लुप्तया द्वितीयया कर्मत्वस्येव चित्रा गौर्यस्येति विग्रहवाक्यस्थलुप्तयत्पदादेवान्यपदार्थस्योपस्थितिसंभवे किं लक्षणया। न च विग्रहवाक्यस्थस्य[3] यस्येतिपदस्य स्मृतावपि कर्मत्वेनानुपस्थितेर्नानयनान्वयसंभव इति वाच्यम् । तामिति पदमप्यध्याहृत्यान्वयबोधोपपत्तेरिति चेद् , न। पदान्तराध्याहारतो लक्षणाया एव ज्यायस्त्वात् । अन्यथा गङ्गायामित्यादावप्य[4]ध्याहारापत्तेः । दधि पश्येत्यत्र तु क्रियाकर्मभावान्वये घटः कर्मत्वमित्यादावन्वयाननुभवेन द्वितीयोपस्थाप्यकर्मत्वस्यैवाङ्गतया लुप्ताया द्वितीयाया एव कर्मत्वोपस्थापकत्वकल्पनात्। किञ्च, बहुव्रीहेर्नित्यसमासतया विग्रहाभावात्, समस्यमानैरेव पदैरर्थकथनस्य विग्रहत्वाद् , इह त्वसमस्यमानेन यत्पदेनार्थकथनात्[5]। चित्रा गौर्यस्येति[6] च बहुव्रीहिवाक्यस्यार्थकथनमात्रमिति बहुव्रीहावपि न वाक्ये लक्षणा। बहुव्रीहिश्चातद्गुणसंविज्ञानस्तद्गुणसंविज्ञानश्चेति द्विविधः । तत्र यत्र शक्यस्य न क्रियान्वयः तत्राद्यः । यथा चित्रगुमानयेत्यादौ। तत्र शक्यस्य गोः क्रिया-

---

१. 'य्यम् । अ' क. पाठः. २. 'कस्या' क. पाठः. ३. 'स्य स्मृ' क. पाठः. ४. 'वध्या' क. पाठः. ५. 'न क' क. पाठः. ६. 'ति ब' क. पाठः.

न्वयात्। यत्र शक्यस्यापि क्रियान्वयस्तत्र तद्गुणसंविज्ञानबहुव्रीहिः। यथा चैत्रादीन् भोजय, लम्बकर्णमानयेत्यादौ। तत्र शक्यस्य चैत्रस्य कर्णस्य च क्रियान्वयात्। तत्र चैत्रादीनित्यत्र निमन्त्रितत्वमेव शक्यसम्बन्धो लक्ष्यतावच्छेदकं च । चैत्रस्य शक्यस्य मैत्रादेर्लक्ष्यस्य च तेन रूपेणोपस्थितेः। लम्बकर्णमित्यत्र तु कर्णकर्णवतोर्यः सम्बन्धस्तन्निरूपकत्वमेव कर्णकर्णवदुभयसाधारणं लक्ष्यतावच्छेदकं शक्यसम्बन्धश्च[1]। न च लम्बकर्णमानयेत्यस्यापि[2] तद्गुणसंविज्ञानत्वे चैत्रादीन् भोजयेत्यत्र चैत्रमैत्रयोरिव कर्णकर्णवतोस्तुल्यवत्क्रियान्वयः स्यात्। न त्वेवम्। कर्णस्य विशेषणत्वेन कर्णवतः प्राधान्येन क्रियान्वयादिति वाच्यम्। कर्णकर्णवतोरपि प्राधान्येनैव क्रियान्वय इत्येके। प्राधान्येन क्रियान्वयाभावेऽपि क्रियान्वयिस्वार्थकत्वरूपं तद्गुणसंविज्ञानत्वमक्षतमेवेत्यन्ये। न च क्रियान्वयिस्वार्थकत्वमात्रस्य तद्गुणसंविज्ञानत्वे काकेभ्यो दधि रक्ष्यतामित्यत्रापि त(था? दा)पत्तिरिति वाच्यम्। बहुव्रीहित्वे सतीत्यपि विशेषणात्। तस्माद् बहुव्रीहौ सर्वत्रोत्तरपद एव लक्षणा, न तु वाक्य इति दिक्।

वैयाकरणास्तु—बहुव्रीहौ नियमतोऽन्यपदार्थे[3] तात्पर्यान्नियमतोऽन्यपदार्थोपस्थापकत्वाच्चान्यपदार्थे[4][5] शक्तिरेव। नहि लक्षकपदस्यान्यपदार्थे तात्पर्यनियमस्तदुपस्थापकतानियमश्च संभवति। ननु बहुव्रीहौ न वाक्ये (न?) लक्षणा, किन्तु उत्तरपदे। तस्यार्थविशेषे न तात्पर्यनियमादिकमिति (चेद्, न)। तथापि

---

१. 'श्च । ल' क. पाठः. २. 'स्य त' क. पाठः. ३. 'र्थोपस्था' ख. पाठः. ४. 'यतान्य' क. पाठः. ५. 'र्थबोधक' क. पाठः.

बहुव्रीहिस्थपदद्वयेऽर्थविशेषे तात्पर्यादिनियमेन शक्तेरावश्यकत्वात्। न च तथापि निरूढलक्षणैवास्त्विति[1] वाच्यम्। शक्तेरेव निरूढलक्षणातो ज्यायस्त्वादित्याहुः।

अत्रोच्यते—तात्पर्यनिर्वाहिका वृत्तिः। तात्पर्यं च त्रिविधम्। औत्सर्गिकमापवादिकं नियतं चेति। तत्र यत्रौत्सर्गिकं तात्पर्यं, यथा गङ्गादिपदानां प्रवाहादौ, तत्र शक्तिः। यत्र त्वापवादिकं, यथा गङ्गादिपदस्य तीरादौ, तत्र लक्षणा। यत्र तु नियतं, यथा धूमादित्यादिहेत्ववयवत्वावच्छेदेन[2] ज्ञाने घटं करोतीत्यादौ च घटावयवादौ, तत्र निरूढलक्षणा। ततश्च बहुव्रीहौ पदान्तरसमभिव्याहृतोत्तरपदत्वावच्छेदेनान्यपदार्थे तात्पर्यनियमान्निरूढलक्षणैव युक्ता। न चैवं घोषपदसमभिव्याहृतगङ्गापदत्वावच्छेदेन तीरे तात्पर्यनियमात् तत्रापि निरूढलक्षणा स्यादिति वच्यम्। तत्र घोषाधारतायोग्यनिबिडद्रव्यान्तरेऽपि कदाचित् तात्पर्यसम्भवेन तीरे तन्नियमाभावात्। ननु द्विरेफ इत्यत्र[3] बहुव्रीहौ द्वौ रेफौ यस्येत्यन्यपदार्थे रेफद्वयवति भ्रमरशब्दे न तात्पर्यं, किन्तु भ्रमरशब्दवाच्य एवेति बहुव्रीहावन्यपदार्थे(न) तात्पर्यनियम इति चेद्, न। बहुव्रीहित्वावच्छेदेनान्यपदार्थे तात्पर्यनियमकल्पनाद् द्विरेफपदेऽपि भ्रमरपदवाच्यस्यैवान्यपदार्थत्वकल्पनात्। न च तस्य न रेफद्वयवत्त्वमिति वाच्यम्। भ्रमरशब्दगतस्य रेफद्वयस्य तदर्थेऽपि परम्परासम्बन्धेन

---

१. 'णास्त्विव' क. पाठः. २. 'वाव' क. पाठः. ३. 'त्र द्वौ' क. पाठः.

सत्त्वात् । तादृशसम्बन्धस्यैव तत्र विवक्षितत्वात् । अतो बहुव्रीहावन्यपदार्थे निरूढलक्षणैव, न शक्तिः ।

नन्वेवं बहुव्रीहावुत्तरपदस्य लक्षकत्वे लक्ष्यवाचकपदान्तरसमानलिङ्गता न स्यात्, गङ्गायामित्यादावदर्शनादिति चेद्, न । विशेषणपदस्य विशेष्य[1]पदलिङ्गग्राहितया चित्रगुर्देवदत्त इति विशेष्यपदलिङ्गग्राहितोपपत्तेः । अत एव नीलः पटो नीलं वस्त्रमिति लक्षकस्यापि नीलपदस्य विशेषणपदत्वेन विशेष्यपदलिङ्गग्राहिता । अन्यथा विशेष्यपदलिङ्गग्राहित्वमात्रेण शक्तिकल्पने नीलादिपदेऽपि शक्तिः स्यात् । न च देवदत्तस्य पदमित्यत्र विशेषणपदस्य देवदत्तस्येत्यस्य न विशेष्यभूतपदलिङ्गग्राहिता । देवदत्तः पचतीत्यत्र सुप्तिङोर्विशेषणविशेष्यपदयोः समानलिङ्गताभा(वाच्च?वश्च) इति वाच्यम् । विशेष्यपदेन सहैकार्थवृत्तेर्विशेषणपदस्य विशेष्यपदलिङ्गग्राहितानियमात् । देवदत्तस्य पदमित्यत्र न विशेषणपदस्य विशेष्यपदेन सहैकार्थवृत्तित्वम् । तथा सुप्तिङोरपीति न तत्र व्यभिचारः । न च तिङ[2]ापि कर्तुर्वाच्यतया सुप्तिङोः कथं नैकार्थत्वमिति वाच्यम् । तिङः कर्तृ[3]गतसंख्यावाचित्वेऽपि कर्तुराक्षेपलभ्यतया तद्वाचकत्वाभावात् । न च कर्तुराक्षेपलभ्यत्वे कथं शाब्दानुभवविषयत्वमिति वाच्यम् । प्रथमान्तपदोपस्थाप्यत्वस्यैवाक्षेपलभ्यशब्दार्थत्वात् । अतः सुप्तिङोर्नैकार्थवृत्तित्वामिति न तत्र व्यभिचारः । लिङ्गविशेषानुशासनाभावे सतीत्यपि विशेषणीयम् । अतो देवदत्तो

१. 'ष्यलि' ख. पाठः. २. 'ङो' क. पाठः. ३. 'तृसं' क. पाठः

मित्रमित्यादौ मित्रादिपदस्य देवदत्तादिपदलिङ्गग्राहित्वाभावेऽपि न व्यभिचार इति दिक् ॥

इति बहुव्रीहिलक्षणावादः ।

---

## अथ तत्पुरुषलक्षणावादः ।

एवं राजपुरुष इत्यादिषष्ठीतत्पुरुषसमासेऽपि नियमतः षष्ठ्यर्थसम्बन्धप्रतीतेर्निरूढलक्षणयैवोपपत्तेर्न षष्ठ्यर्थे शक्तिकल्पना । अत एव तद्धनमित्यादौ सर्वनाम्नः सर्वशक्तत्वेनानुपपत्त्यभावेऽपि तत्पदे सम्बन्धलक्षणा, निरूढलाक्षणिकत्वात् । ननु राज्ञः पुरुष इति विग्रहे समासविधानाल्लुप्तषष्ठ्येव स्मृता सम्बन्धबोधिकास्त्विति तत्पुरुषे लक्षणापि न कल्प्येति चेद्, न। समासोपस्थितिसमये नियमतो विग्रहस्मरणे मानाभावात्। विग्रहाभिधानस्य च तत्र समासार्थकथनमात्रत्वात् । दधि पश्येत्यादौ तु लुप्तद्वितीयास्मरणस्य विभक्तिविशेषाभावे घटः कर्मत्वमित्यत्रेव क्रियाकर्मभावान्वयानुपपत्त्या प्रागेव साधितत्वात् । समासे त्वनुशासनबलेन साधुत्वाद् विभक्त्यभावेऽपि नैराकाङ्क्ष्याविरहेण व्युत्पत्तिभेदात् । नन्वेवमपि राजपदाद् राज्ञः पुरुषपदात् पुरुषस्य संसर्गमर्यादया सम्बन्धस्य[1] च भानोपपत्तेर्न सम्बन्धलक्षणा कल्प्येति चेद्, न । समासस्य राज्ञः पुरुष इति विग्रहसमानप्रकारकज्ञानजनकत्वानुरोधेन विग्रहे प्रकारीभूतस्य

---

१. 'स्य भा' क. पाठः.

सम्बन्धस्य समासेऽपि प्रकारत्वार्थं तत्र लक्षणावश्यम्भावात् । ननु 'विभाषे'(२.१.११)ति सूत्रेण विग्रहसमासयोरनुशासनात् समासे शक्तिसिद्धिरिति चेद्, न । व्याकरणस्य साधुत्वमात्रज्ञापकत्वेन तद्बलात् साधुत्वमात्रसिद्धावपि शक्त्यसिद्धेः । न च साधुत्वेन शक्तिरनुमीयत इति वाच्यम् । सुबन्ततिङन्तपदयोर्व्याकरणसाधुत्वेऽपि क्वाप्यशक्तेः, प्रत्येकमेव प्रकृतिप्रत्यययोः शक्तत्वात् । अतो नानुशासनबलादपि शक्तिः । अत एव 'द्व्येकयोर्द्विवचनैकवचने' (१.४.२२) इति सूत्रमेकत्वादावेकवचनादेर्न शक्तत्वज्ञापनार्थम् । 'तान्येकवचनद्विवचनबहुवचनान्येकशः'(१.४.१०२) इति सूत्रेणैकस्य वचनमेकवचनमित्याद्यन्वर्थसंज्ञाबलादेवैकवचनादेरेकत्वादौ शक्तिसिद्धेः । अत इदं सूत्रं व्यर्थमित्याशङ्क्य शक्तत्वज्ञापकत्वाभावेऽप्येकत्व एवैकवचनं द्वित्व एव द्विवचनं च साधु, न तु लक्षणयाप्यन्यत्रेति ज्ञापनार्थतया नेदं सूत्रं व्यर्थमित्युक्तम् । न चैवमन्यविभक्तेरन्यविभक्त्यर्थे लक्षणयाप्यसाधुत्वे मातुः स्मरतीत्यादौ षष्ठ्यादेर्द्वितीयाद्यर्थे लक्षणयापि प्रयोगो न साधुः स्यादिति वाच्यम् । व्यत्ययानुशासनबलेन यत्र विशेषानुशासनं, तत्र विभक्तेर्विभक्त्यन्तरार्थे लक्षणया साधुत्वेऽप्यन्यत्रासाधुत्वावगमात् । न चैवमेकस्यां भार्यायां दारा इति बहुवचनानुपपत्तिरिति वाच्यम् । तत्र बहुवचनप्रयोगस्य शब्दसाधुत्वमात्रार्थत्वेन बहुत्वस्य प्रकृत्यर्थानन्वयात् । एवं च

१. 'क्य' ख. पाठः. २. 'क्तिसिद्धिर' क. पाठः. ३. 'क्तिज्ञा' क. पाठः. ४. 'नमि' क. पाठः. ५. 'त्यन्व' पाठः.

विशेषानुशासनाभावे सुब्विभक्तेर्न विभक्त्यन्तरार्थे लक्षणयापि साधुत्वम् ।

नन्वेवं तुल्यन्यायतया तिङ्विभक्तेरपि विशेषानुशासनं विनान्यत्र लक्षणयाप्यसाधुत्वाद् रथो गच्छतीत्यादौ व्यापारे लक्षणा न स्यादिति चेद्, न । आख्याते व्यत्ययानुशासनबलेन विभक्त्यन्तरार्थे लक्षणाविरहेऽपि व्यापारलक्षणायामदोषादिति दिक् ।

ननु राजपुरुषमानयेत्यत्र राजसम्बन्धिपुरुषे द्वितीयोपस्थापितकर्मत्वावगतिरित्यविवादम् । विभक्तिश्च प्रकृत्यर्थगतस्वार्थबोधिकेति विशिष्टपुरुषस्य प्रकृत्यर्थतासिद्धये समासस्य विशिष्टपुरुषे[1] शक्तिरभ्युपेयेति चेद्, न । द्वितीयया पुरुषे कर्मत्वमुपस्थाप्यते, तत्र राजसम्बन्धित्वं च भासत इति राजसम्बन्धिपुरुषे कर्मत्वान्वयोऽर्थात् सिध्यतीति न तदर्थमपि समासे शक्तिकल्पनमिति दिक् । इदं त्ववधेयं — राजपुरुष इत्यत्र षष्ठ्यर्थसम्बन्ध एव लक्ष्योऽनन्यलभ्यत्वाद्, न तु सम्बन्धी, तस्य पुरुषपदादेवोपस्थितेरिति प्राञ्चः ।

नव्यास्तु राजपुरुष इत्यत्र राजसम्बन्धिपुरुषप्रतीतेः सम्बन्धिन्येव लक्षणा । न च यथा देवदत्तः पचतीत्यत्र पाकानुकूलयत्नवानिति यत्नवतः प्रतीतावप्यन्यलभ्यत्वान्न यत्नवतः शक्यत्वं, तथात्रापि न सम्बन्धिनो लक्ष्यत्वम्, अन्यलभ्यत्वादिति वाच्यम् । प्रातिपदिकार्थयोरभेदान्वयस्य[3] व्युत्पत्तिसिद्धतया राजपदार्थपुरु-

---

१. 'ष इति' क. पाठः. २. 'ष्टे' क. पाठः. ३. 'नुभवस्य' ख. पाठः.

षपदार्थयोरभेदानुभवार्थमत्र सम्बन्धिलक्षणावश्यंभावात् । अत एव नीलघटमानयेत्यत्र नीलपदार्थघटपदार्थयोरभेदान्वयानुभवबलादेव नीलपदस्य धर्मिणि लक्षणा । अन्यथा गुणपरत्वे समवायस्य संसर्गमर्यादयोपस्थितौ लक्षणानर्थक्यात् । अत एव समानविभक्तिकप्रातिपदिकार्थयोरेवाभेदान्वयानुभवनियमः । समासे च समानविभक्तिकत्वाभावेन[1] नाभेदानुभव इत्यपास्तम् । समानविभक्तिकत्वाभावेऽपि[2] नीलघटमित्यत्राभेदानुभवात् । न च प्रातिपदिकार्थयोः[3] सर्वत्राभेदानुभवव्युत्पत्तौ दण्डेन गामानयेत्यत्राप्यभेदानुभवव्युत्पत्त्यापत्तिरिति[4] वाच्यम् । तावता विरुद्धविभक्त्यनवरुद्धप्रातिपदिकार्थयोरभेदानुभवव्युत्पत्तौ बाधकाभावात् । यदि च देवदत्तस्य पुत्रस्य भार्येत्यादौ देवदत्तपुत्रयोस्तथाविधयोरपि नाभेदानुभवः, तदा एकार्थवृत्तित्वयोग्येत्यपि प्रातिपदिकविशेषणं देयम् । न चैवमपि भूतले घटो नेत्यत्र घटतदभावयोः प्रातिपदिकार्थयोरभेदान्वयाभावाद् व्यभिचार इति वाच्यम् । उक्तयुक्तिबलेन तत्रापि घटपदेन घटप्रतियोगिको लक्ष्यत इति घटप्रतियोगिकाभावयोरभेदानुभव एव । न च विरुद्धविभक्त्यनवरुद्धत्वापेक्षया समानविभक्त्यवरुद्धत्वमेव लघ्विति समासे तदभावान्नाभेदानुभव इति वाच्यम् । तथा सति नीलघटमित्यत्राभेदानुभवबलान्नी(लपदे) लक्षणेति सिद्धान्तविरोधापत्तेः । तस्मात् षष्ठीतत्पुरुषे सम्बन्धिन्येव लक्षणेत्याहुः ॥

इति तत्पुरुषलक्षणावादः ।

१. 'त्वा' क. पाठः. २. 'क्त्यभा' क. पाठः. ३. 'क्तित्वा' क. पाठः. ४. 'योरभे' क. पाठः. ५. 'त्राभे' क. पाठः.

## अथ कर्मधारयलक्षणानिरासः ।

नन्वेवं नीलोत्पलमिति कर्मधारयेऽपि नीलपदेऽपि नीलाभेदे शक्तिर्लक्षणा वावश्यमङ्गीकार्या । अन्यथा नीलाभेदप्रतीत्यनापत्तेरिति चेद्, न । किमभेदे शक्त्यादिकं विना स्मृत्यभाव आपाद्यते किं वा स्वस्वानुभवाभावः । आद्य इष्टत्वात् । नहि नीलोत्पलमित्यत्र नीलत्वविशिष्टोत्पलाभ्यामन्यत् स्मर्यते । नान्त्यः । संसर्गमर्यादया नीलोत्पलपदार्थयोरभेदानुभवे बाधकाभावेन तदर्थं शक्त्याद्य(र्थ?)कल्पनात् । ननु यथा राज्ञः पुरुष इति विग्रहसमानार्थकथनार्थं राजपुरुष इति समासे सम्बन्धलक्षणा, तथा नीलमुत्पलमिति व्यासे विशेषणविभक्तेरभेदार्थत्वेन नीलाभिन्नत्वप्रकारकज्ञानजननात् तदैकरूप्याय समासेऽप्यभेदशक्त्यादिकमावश्यकमिति चेद्, न । विशेषणविभक्तेः कर्मत्वादिशक्तायाः अभेदार्थकत्वस्यापि कल्पने गौरवापत्त्या साधुत्वमात्रार्थत्वेन व्यासेऽपि नीलाभेदस्य संसर्गमर्यादयैव प्रतीतेः । अन्यथा नीलपदस्य नीलाभेदपरत्वे नीलाभिन्नमुत्पलमिति नीलाभिन्नाभेदस्यापि संसर्गमर्यादया प्रतीत्यङ्गीकारापत्तेः । न चेष्टापत्तिः । तथा सति तत्पुरुषादाविव कर्मधारयेऽपि लक्षणाद्यविशेषे "बहुव्रीहितत्पुरुषाभ्यां कर्मधारयस्य बलीयस्त्वात् 'एतया निषादस्थपतिं याजयेदि'त्यत्र न निषादानां स्थपतिरिति तत्पुरुषः, निषादपदे सम्बन्धे लक्षणापत्तेः । नापि निषादः स्थपतिः स्वामी यस्येति बहुव्रीहिः । अन्यपदार्थे लक्षणापत्तेः । किन्तु निषादश्चासौ स्थपतिश्चेति कर्मधारयः" इति मीमांसासिद्धान्तविरोधात् । न च कर्मधारयेऽपि निषादस्य या-

गानुकूलविद्याप्रयुक्तिकल्पनागौरवं स्यादिति वाच्यम् । शब्द-शक्त्यनुरोधेनार्थे निश्चिते तदुपपाद(क)कल्पनस्य प्रामाणिकत्वादिति दिक् । अर्धपिप्पलीति तत्पुरुषे तूत्तरपदे षष्ठ्यर्थे लक्षणा । अतश्च पिप्पल्या अर्धमित्यर्थो लभ्यते । तथोपकुम्भमित्यव्ययीभावेऽप्युत्तरपदे षष्ठ्यर्थे लक्षणा । ततः कुम्भस्य समीप इत्यर्थो लभ्यत इति दिक् ॥

इति कर्मधारयलक्षणानिरा सः ।

## अथ नञर्थलक्षणावादः

एवं न घटः पट इति पर्युदासे भूतले घटो नेति प्रसज्यप्रतिषेधे च नञोऽन्योन्याभावे संसर्गाभावे च लक्षणैव । नेति केवलेन नञा सामान्यतोऽभावत्वविशिष्टमात्रप्रतीतेर्लाघवाच्चाभावत्वविशिष्टमात्रशक्तेन तेनान्योन्याभावत्वात्यन्ताभावत्वप्रकारकप्रतीत्योः घटपदेन नीलघटत्वप्रकारकप्रतीतिवल्लक्षणां विनानुपपत्तेः । एवमुभयत्रापि लक्षणातौल्येऽपि पर्युदासापेक्षया प्रतिषेधो बलीयान् । पर्युदासेऽपि (न)घटः पट इति सामानाधिकरण्यप्रतीत्या नञो घटप्रतियोगिकान्योन्याभाववति लक्षणावश्यकत्वात् । प्रतिषेधे तु घटप्रतियोगिकाभाव एव लक्षणाकल्पनात् । नन्वेवं 'यजतिषु येयजामहं करोति नानूयाजेष्वि'त्यत्र नानूयाजेषु अनूयाजव्यतिरिक्तेषु यजतिषु येयजामह इति मन्त्रं करो(ती)ति पर्युदास एव, न प्रसज्यप्रतिषेध इति सिद्धान्तो

भज्येत। प्रसज्यप्रतिषेधस्यैव बलीयस्त्वादिति चेत्। सत्यम्। प्रसज्यप्रतिषेधे हि यजतिषु येयजामहं कुर्यात्, अनूयाजेषु तु न कुर्यादिति येयजमाह इति विधिपरं वाक्यं स्यादिति वाक्यभेदः स्यात्। स(म्भवति) चैकवाक्यत्वे वाक्यभेदो न युक्तः। किञ्चानूयाजेषु यजतिषु येयजामहं न कुर्यादिति यजतिषु येयजामहं करोतीति सामान्यशास्त्रप्राप्तस्य येयजामहस्य निषेधेऽष्टदोषकदुष्टविकल्पापत्तिः। अत एव पशावतिदेशशास्त्रप्राप्तयोराज्यभागयो(र्नाज्यावका?नें तौ प)शौ करोतीति निषेधाद् विकल्प इति मीमांसकाः। तस्माद् वाक्यभेदविकल्पपरिजिहीर्षया तत्र जघन्यस्यापि पर्युदासस्याश्रयणम्। न च नानूयाजेष्वित्यत्र न पर्युदासः सम्भवति, अननूयाजेष्विति नञ्समासाभावादिति वच्यम्। व्यासेऽपि पर्युदासाविरोधादित्येके। नात्र नञ्समासः। किन्तु 'गमिकर्मीकृतनैकनीवृते'त्यत्रेव नसमास एवेत्यपरे।

ननु नञः संसर्गाभावपरत्वे क्वचिदनुयोगिपदे सप्तम्यपेक्षा दृश्यते भूतले घटो नेति। क्वचित्तु तदनपेक्षा। यथा मैत्रो न गच्छतीत्यत्र गमनानुकूलयत्नाभाववान् मैत्र इति। किमत्र नियामकमिति चेद्, उच्यते। यत्रानुयोग्यभावयोराधाराधेयभावोऽन्वयबोधे प्रकारतया भासते। यथा भूतले घटो नेत्यत्राधारत्वस्य प्रकार(क?)त्वसिद्धये पूर्वोपस्थित्यर्थं तद्वाचकसप्तम्यपेक्षा। मैत्रो न गच्छतीत्यत्र त्वाधाराधेयभावस्य संसर्गमर्यादया भानात् पूर्वोपस्थित्यनपेक्षणेन (न) सप्तम्यपेक्षेत्याहुः।

इदं तु ध्येयं—भूतले घटो नेत्यत्र भूतलाधारको घटप्रति-

योगिकोऽभाव इति नञर्थविशेष्यकोऽभावप्रत्यय इति केचित् । एवं सति पटे पटत्वं न घट इत्यत्र पटत्वं पटवृत्ति घटवृत्त्यभावप्रतियोगि चेति पटत्वविशेष्यकान्वयबोधोऽनुभवसिद्धो न स्यात् । तत्र त्वदुक्तरीत्या पटत्वं पटवृत्ति पटत्वाभावो घटवृत्तिरित्युभयविशेष्य(क)प्रतीत्यापत्तेः । अतो नाभावविशेष्यकः प्रत्ययः । किन्तु भूतले घटो नेत्यादौ घटो भूतलनिष्ठाभावप्रतियोगीति प्रतियोगिविशेष्यक एव । अत एव पटे पटत्वं न घट इत्यत्र पटत्वं पटवृत्ति घटनिष्ठात्यन्ताभावप्रतियोगि चेति पटत्वविशेष्यकप्रतीतिरपि सङ्गच्छत इत्यन्ये। भूतले घटो नेत्य(त्रा)भावविशेष्यकत्वपक्षे प्रातिपदिकार्थयोरभेदान्वयव्युत्पत्त्यनुरोधाय घटपदे घटप्रतियोगिके लक्षणा । ततश्च भूतले घटप्रतियोगिकोऽभाव इति प्रतीतिर्भवति । प्रतियोगिविशेष्यकत्वपक्षे तु सप्तम्यर्थे नञर्थान्वयः, नञ(र्थाभाव ?)श्चाभावप्रतियोगि(नि) लक्षणा । ततश्च भूतलाधाराभावप्रतियोगी घट इति प्रतीतिर्भवति । घटो नास्तीति क्रियापदयोगे आख्यातोपात्तसंख्या पक्षद्वयेऽपि प्रतियोगिन्यन्वेति । वर्तमानत्वं त्वभाव इति दिक् ।

ननु नञा क्वचिदन्योन्याभावधीः क्वचित् संसर्गाभावधीरित्यत्र किं विनिगमकमिति चेद्, उच्यते । यत्र समानविभक्ति(क)प्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतत्वं नञः, तत्रान्योन्याभावबोधकत्वम् । यथा न घटः पट इति । अन्यत्र तु संसर्गाभावबोधकत्वमित्येके । एवं सत्यग्रे वृक्षो न कपि-

संयोगीत्यत्राकुड्यं भूतलमित्यत्राप्यन्योन्याभावधीप्रसङ्गात्। तस्माद् यत्र यथा व्युत्पत्तिः, तत्र तथा धीरिति दिक् ॥

इति नञर्थलक्षणावादः।

## अथेतरेतरयोगद्वन्द्वलक्षणानिरासः।

धवखदिरौ छिन्धीतीतरेतरद्वन्द्वे तु न लक्षणा। शक्त्यैवोपस्थितयोर्धवखदिरयोश्छिदिक्रियान्वये बाधकाभावात्।

अत्र मीमांसकाः—इतरपदार्थान्वययोग्यतावच्छेदकावच्छिन्नत्वेनोपस्थित एव धर्मिणीतरपदार्थान्वयः। अत एव घटेन जलमाहरेत्यत्रच्छिद्रेतरत्वेनोपस्थित एव घटे जलाहरणान्वयः। ततश्च प्रकृते विभक्त्युपस्थितद्वित्वान्वयितावच्छेदकावच्छिन्नत्वेन धवखदिरयोरुपस्थितिर्वाच्या। तदन्वयितावच्छेदकत्वं च न शक्त्युपस्थितयोर्धवत्वखदिरत्वयोः, द्वित्वपर्याप्त्यधिकरणतावच्छेदकधर्मस्यैव तदन्वयितावच्छेदकत्वात्। किन्तु खदिरसहितावस्थधवत्वस्यैव तथात्वमिति तादृशरूपेण धवोपस्थि(ते ? तये) प्रथमश्रुते धवपदे तुल्यवदेकक्रियान्वयित्वरूपसाहित्याश्रये धवेऽवश्यं लक्षणाङ्गीकार्या। किञ्च घट इत्यादौ विभक्त्युपस्थाप्यायाः सङ्ख्यायाः प्रकृत्यर्थतावच्छेदकघटत्वादिव्याप्यत्वस्य दर्शनाद् विभ(क्त्य?क्तित्वा)वच्छेदेन प्रकृत्यर्थतावच्छेदकव्याप्यसंख्याभिधायित्वनियमकल्पनादिहापि द्विवचनविभक्त्युपस्थाप्यद्वित्वव्यापकं प्रकृत्यर्थतावच्छेकमभ्युपेयम्। तादृश(बन्धंच ? ञ्च) न धवत्वादि, (किन्तु) तुल्यवत्क्रियान्वयित्वरूपसाहित्याश्रयत्वमेव पदार्थतावच्छेदकमवश्यं वाच्यमिति

तद्रूपोपस्थितये धवपदे साहित्याश्रये लक्षणा। न चैवं धवपदादेव खदिरसहितधवोपस्थितौ खदिरपदानर्थक्यमिति वाच्यम् । खदिरपदाभावे साहित्याश्रयतया खदिरादन्यस्यापि प्रतीतिप्रसङ्ग (इति) खदिरस्यैव साहित्याश्रयत्वलाभाय तात्पर्यग्राहकतया खदिरपदसार्थक्यात् । तस्माद् इतरेतरद्वन्द्वे साहित्याश्रये लक्षणेत्याहुः ।

अत्रोच्यते — यद्यपि साहित्यमन्वयितावच्छेदकं, तथापि परमते घटेन जलमाहरेत्यत्रच्छिद्रेतरत्वस्येव पदादनुपस्थितस्यापि साहित्याश्रयत्वस्य शाब्दबोधविषयत्वसम्भवेन साहित्याश्रये लक्षणानावश्यकत्वात् । अन्यथा घटेन जलमाहरेत्यत्रापि घटपदस्यच्छिद्रेतरघटे लक्षणापातात् । ततश्च यथा प्रत्यक्षेण प्रत्येकमुपस्थिते पदार्थद्वयेऽपि द्वित्वप्रतीतिः, तथा शब्दद्वयेन पृथगुपस्थिते पदार्थद्वये द्वित्वबोधे बाधकाभावेन कृतं तुल्यवदेकक्रियान्वयित्वलक्षणसाहित्यलक्षणया । यदपि प्रकृत्यर्थतावच्छेदकव्याप्यसंख्याभिधायकत्वं विभक्तेरित्युक्तं, तदपि लाघवेन प्रकृत्यर्थतावच्छेदकसमानाधिकरणसंख्याभिधायित्वमेव विभक्तेरि(त्यु?ति यु)क्तं, नियमांशवैयर्थ्यात् । कि(ञ्चित्?ञ्च) यद्रूपावच्छिन्ने विभक्त्यर्थान्वयस्तद्रूपावच्छिन्न एव धात्वर्थान्वय इति नियमात् साहित्यावच्छिन्ने द्वित्वान्वये तद्रूपावच्छिन्ने छिदिक्रियान्वयः स्यात् । न च तद् भवति, छेदनस्य प्रत्येकमात्रविश्रान्तेः । तस्मात् प्रत्यक्ष इव शब्दद्वयात् प्रत्येकमुपस्थितयोरेव पदार्थयोर्विभक्त्यर्थद्वित्वान्वय इति न तदर्थं साहित्याश्रयलक्षणा । अत एव —

"चन्द्रे कलङ्कः सुजने दरिद्रता
विलासलक्ष्मीः कमलेषु चञ्चला ।
मुखाप्रसादः सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम् ॥"

इत्यत्र साहित्याश्रयोपस्थापकद्वन्द्वाभावेऽपि प्रत्येकमुपस्थितेषु कलङ्कादिषु कथयन्तीत्याख्यातोपात्तबहुत्वान्वयधीः । ननु तत्रापि घटस्तिष्ठतीत्यादौ सुप्तिङोरेकसंख्याभिधायकत्वरूपसामानाधिकरण्यव्युत्पत्तेरेतानीत्येकशेषस्य साहित्याश्रयोपस्थापकस्य कल्पनावश्यकीति चेद्, न । प्रयोगानुसारेण व्युत्पत्तिकल्पनम् । प्रयोगश्च घटपटौ स्त इतिवद् घटश्च पटश्च स्त इत्यप्यविशिष्टः । ततश्च समभिव्याहृतसुब्विभक्त्युपस्थापिता सङ्ख्या यत्र स्वान्वयाविरोधिनी, तत्र तदुपस्थाप्यसङ्ख्यान्वयव्युत्पत्तिः कल्प्यते । भवति च घटपटौ स्त इत्यत्र तदुपस्थाप्याया द्वित्वसंख्याया अविरोधिनी सुब्विभक्त्युपस्थाप्या द्वित्वसङ्ख्या । भवति च घटः पटश्च स्त इत्यत्रापि समभिव्याहृतसुब्विभक्त्युपस्थाप्यमेकत्वद्वयं तदुपस्थाप्यद्वित्वसंख्याया अविरोधि, द्वाभ्यामेकत्वाभ्यां द्वित्वारम्भात् । अत एव चन्द्रे कलङ्क इत्यादावपि नैतानीति पदाध्याहारः । कलङ्कदरिद्रतादिपदोपस्थाप्यानामनेकेषामेकत्वानां तदुपस्थाप्यबहुत्वान्वयविरोधित्वाभावात् । घटः सन्तीति न प्रयोगः, सुब्विभक्त्युपस्थाप्यैकत्वसंख्यायास्तदुपस्थाप्यबहुत्वसंख्याविरोधित्वात् । तस्मादितरेतरद्वन्द्वे न लक्षणा॥

इतीतरेतरयोगद्वन्द्वलक्षणानिरासः ।

## अथ विरूपैकशेषलक्षणावादः

एवं घटौ स्त इति सरूपैकशेषेऽपि न लक्षणा । घटपदेन शक्त्यैव युगपदुपस्थिते घटद्वये द्वित्वान्वयसम्भवात् । माता च पिता च पितरावित्यादि(धी?)विरूपैकशेषे तु लक्षणैव । जनकपुरुषशक्तेन (पितृपदेन) जनकस्त्रीत्वपुरुषत्वोभयप्रकारकप्रतीतेर्लक्षणासाध्यत्वात् । ननु पितरावित्यत्र लक्षणायामपि ब्राह्मणी च ब्राह्मणश्च ब्राह्मणावित्यत्र न लक्षणा । ब्राह्मणपदस्य शक्त्यैव ब्राह्मणत्वविशिष्टोपस्थापकत्वात् । ब्राह्मणत्ववैशिष्ट्यस्य च पुरुष इव स्त्रियामपि सत्त्वात् । न च ब्राह्मणत्वजातेः स्त्रीवृत्तित्वे स्त्रीत्वादिजात्या सङ्कर इति पुम्मात्रनिष्ठतैवेति स्त्रीपरत्वे लक्षणावश्यिकेति वाच्यम् । स्त्रीत्वस्य जातित्वाभावात् । अन्यथा गोत्वजातेर्वृषभसाधारण्यं न स्यात्, स्त्रीत्वादिना साङ्कर्यापातात् । अस्तु वा गत्वादिव्याप्यतारत्वादिवद् ब्राह्मणत्वव्याप्यस्त्रीत्वादेर्नानात्वम् । (इति चेत् । न,) अ (तो? थापि) ब्राह्मणत्वविशिष्टशक्तमात्रस्य ब्राह्मणपदस्य ब्राह्मणस्त्रीत्वपुरुषत्वप्रकारकप्रतीतिजननार्थं लक्षणावश्यम्भावादिति दिक् ॥

इति विरूपैकशेषलक्षणावादः ।

## अथ समाहारद्वन्द्वलक्षणानिरासः ।

एवं पाणिपादमिति समाहारद्वन्द्वे चैकत्वान्वयानुरोधेन पाणिपादोभयवृत्तिसाहित्ये लक्षणा । न चैवं पाणिपादस्यान्वयधीविषयता न स्यात्, लक्षणायां मुख्यार्थस्यान्वयबोधाविषय-

त्वादिति वाच्यम् । अजहल्लक्षणायां तदन्वयबोधाविरोधात् । न चैवं पाणिपादं चलतीति न स्यात्, चलनस्य साहित्यरूपधर्मानन्वयादिति वाच्यम् । पाकान्नीलो घट इत्यत्र पाकस्य लक्ष्यतावच्छेदक इव चलनस्य पदार्थीभूतसाहित्यान्वयबोधे तदवच्छेदकपाणिपादान्वयाविरोधात् । अत एव चोत्कृष्टोऽयं शूर इत्यत्रोत्कर्षरूपपदार्थस्य पदार्थतावच्छेदके शौर्य एवान्वयानुभवः। केचित्तु पाण्यादि(घटि)तपरम्परासम्बन्धेन साहित्य एव चलनान्वयः। एवं पाकादेरपि नैल्यादिघटितपरम्परासम्बन्धेन धर्मिण्येवान्वय इत्याहुः। वस्तुतस्तु पाणिपादमित्यादौ 'दारान् नौमि हरेर्लक्ष्मीमि'त्यादौ बहुवचनवदेकवचनं साधुत्वमात्रार्थम् । पदविशेषजन्यपदार्थोपस्थितेरेवान्वयबोधाङ्गतया विभक्त्युपस्थाप्यं कर्मत्वादिकमेव विवक्षितम् । अतः समाहारद्वन्द्वे नैकवचनान्वयार्थं साहित्यलक्षणेति दिक् ॥

इति समाहारद्वन्द्वलक्षणानिरासः ।

---

## अथाख्यातस्य यत्नवाचकत्ववादः ।

एवं रथो गच्छतीत्यादौ यत्नवाचकस्याख्यातस्य गमनानुकूलव्यापारे लक्षणा । न चाख्यातस्य व्यापारे शक्तिरेव किं न स्यादिति वाच्यम् । तथा सति पचतीत्यत्र पाकं करोतीति यत्नवाचककरोतिना विवरणानुपपत्तेः । न च करोतिरपि व्यापारवाचक एव किं न स्यादिति वाच्यम् । कृत्यन्वयाद्यनुविधायिनि घटादावेव कृत इति व्यवहारः । न तु तदन्वयाद्य-

ननुविधायिनि पर्वतादाविति कृञो यत्नार्थकत्वस्य व्यवस्थितेः। किञ्च, कृञो व्यापारवाचित्वे कर्तृपदस्य व्यापाराश्रयोऽर्थः स्यादिति कारकान्तरेऽपि कर्तृपदप्रयोगापत्तेः। ननु कृत्यभावेऽपि चन्दनादिना सुखं कृतं, रथो गमनं करोतीति प्रयोगाद् न(तु?)कृञो यत्नवाचित्वम्। कर्तृपदे च क्रियावाचकस्य कृञो यत्ने निरूढलक्षणा। तृच्प्रत्ययस्य त्वाश्रयत्वे शक्तिरिति योगादेव कृत्याश्रयत्वलाभः। न चैवं विनिगमनाविरह इति वाच्यम्। व्यापारत्वस्य सामान्यत्वेन तत्रैव प्रमाणपक्षपातौचित्यात्। न चैवं पचतीत्यत्र पाकजनकयत्नवानिति कथं प्रतीतिरिति वाच्यम्। पाकानुकूलव्यापारवानित्येव शब्दानुभवः। ततो व्यापारेण यत्नानुमाने तथानुभव इति गृहाण। न च व्यापारस्य यत्नेन व्याप्त्यभावात् कथं व्यापारेण यत्नानुमानमिति वाच्यम्। चेतनव्यापारस्य तद्व्याप्यत्वात्। न चैवं पचतीत्यस्य पाकानुकूलयत्नवानिति विवरणानुपपत्तिरिति वाच्यम्। तात्पर्यार्थमादाय तथा विवरणात्। एवञ्चाख्यातार्थस्य वर्तमानत्वादेरपि व्यापार एवान्वयो न तु यत्न इत्याख्यातार्थस्य वर्तमानत्वस्य यत्नान्वयानुरोधादपि न यत्ने शक्तिः। किं बहुना, आख्यातस्य करोतेर्वा न यत्नवाचित्वम्। घटं करोतीत्यत्र यत्नद्वयस्य यत्नविषयकयत्नस्य चाप्रतीतेः। न च त्वयापि लिङः कृतिशक्त्यङ्गीकाराद् यतेतेत्यत्र (प्र?) कृतिद्वयोपस्थितावप्येकस्याः कृतेरन्वयबोधाविषय(त्वा?त्वव)त् करोतीत्यत्रापि कृतिद्वयोपस्थितावप्येकस्याः कृतेरन्वयबोधाविषयत्वं स्यादिति वाच्यम्। पचेतेत्यादौ लिङः कृतिशक्त्यवधारणेन यतेतेत्यादौ कृतिद्वयो-

पस्थितावपि एकस्या (अ)न्वयबोधाविषयत्वं न दोषावहम्। इह त्वचेतनेऽपि प्रयोगाद् यत्नस्य लडाख्यातवाच्यत्वानिर्धारणेन तद-न्वयस्य दोषत्वात्। तस्माद् व्यापार एवाख्यातवाच्य इति चेद्, उच्यते। आख्यातवाच्यतावच्छेदकं सामान्यमपि न व्या-पारत्वं, तस्योपाधितया गुरुत्वात्। किन्तु जातितया लघु-त्वेन यत्नत्वमेव तथा। न चैवं कर्तृजन्यतावच्छेदकं कार्य(त्वं) न स्यात्। किन्तु घटत्वादिकमेव स्यादिति गतमीश्वरेणेति वाच्यम्। तत्र लघुत्वेऽप्यान(न्य?न्त्या)द् घटत्वादेस्त्याग इ-तीश्वरवादे प्रतिपादितत्वात्। रथो गच्छतीत्यादिप्रयोगस्तु ला-क्षणिक एव।

नन्वेवमपि पाकजनकयत्नत्वापेक्षया पाकजनकत्वस्य लघुत्वात् तदेवाख्यातशक्यतावच्छेदकमस्तु। ततश्च कथमचे-तने (नेणं? गौण)प्रयोगः। यत्नवद् व्यापारस्यापि पाकजनक-त्वेन शक्यत्वादिति चेद्, न। यदि पाकजनकमात्रे शक्तिः, तर्ह्यपचत्यपि पचतीति प्रयोगापत्तिः। तस्मिन्नपि पाकजनकादृ-ष्टसत्त्वात्। न च तवाप्यदृष्टजनककृतिकाले पचतीति प्रयोगा-पत्तिरिति वाच्यम्। अदृष्टजनककृतेः पाकजनकत्वे मानाभा-वात्। तस्माद् यत्न एवाख्यातवाच्य इत्येके। यत्नत्वमात्रमेवाख्या-तवाच्यतावच्छेदकं, न जनकयत्नत्वं, येन जनकत्वमात्रं लाघवात् तदवच्छेदकं स्यात्। न चैवं धात्वर्थजनकत्वं यत्ने न प्रतीयतेति वाच्यम्। धातोर्धात्वर्थजनकत्वलाक्षणिकतया समभि-व्याहारबलाद्वा धात्वर्थजनकत्वप्रतीतिसंभवादित्यपरे। तस्माद्

रथो गच्छतीत्यादौ व्यापारे लक्षणैव। जानातीच्छति यतत इत्यादौ ज्ञानाद्यनुकूलमनस्संयोगे लक्षणा। न चैवं ग(म?ग)नस्यापि जानातीति प्रयोगापत्तिरिति वाच्यम्। तर्हि करोतीत्यत्रेव ज्ञानाद्याश्रये लक्षणास्तु। घटो नश्यतीत्यादौ तु नाशप्रतियोगिनि लक्षणेत्याद्यूह्यम्। एवं कृञ्धातोरपि लाघवाद् यत्न एव वाच्य इति यतते करोतीत्यत्र यत्नद्वयप्रतीतावप्येकस्यानन्वयो न दोषायेति दिक्। ननु किं पाकाद्यनुकूलकृतिप्रचय आख्यातार्थः, कृतिमात्रं वा। नाद्यः, पचतीति न स्याद्, एकदा तावत्कृत्यभावात्। अन्त्ये पाकाद्यनुकूलद्वितीयादिकृतिकालेऽपि पक्ष्यत्यपाक्षीदिति प्रतियोगापत्तिरिति चेद्, न। कृतिमात्रमाख्यातार्थः। ततश्च कृतिमात्रसत्तया वर्तमानप्रयोगः। यावत्कृतिप्रागभावसत्तया पक्ष्यतीति यावत्कृतिध्वंससत्तया चापाक्षीदिति प्रयोग इति व्यवहारबलात् कल्प्यत इति दिक्॥

इति आख्यातस्य यत्नवाचकत्ववादः।

अथ कर्तृकर्मलकारविचारः।

ननु कृताविवाख्यातस्य कर्तरि कर्मणि च शक्तिरुपेया। अन्यथा पचति देवदत्त इत्यत्र कर्तुः पच्यते तण्डुलश्चैत्रेणेत्यत्र कर्मणश्चाख्यातात् प्रतीत्यनापत्तेः। अत एवाख्यातवाच्यायाः संख्याया एकपदोपात्तत्वप्रत्यासत्त्या कर्तृकर्मणोरन्वयनियमो दृश्यते। किञ्च, कर्तृकर्मणोराख्यातानभिधेयत्वे ह्यनभिहिते कर्तरि तृतीयाविधानात् चैत्रेण पच्यत इत्यत्रेव पचतीत्यत्रापि चैत्रेणे

तृतीया स्यात्। आख्यातेन तत्र कर्तुर(न)भिधानात्। तथान-भिहिते कर्मणि द्वितीयाविधानात् पचति तण्डुलमित्यत्रेव पच्यते तण्डुल इत्यत्रापि कर्मणि द्वितीया स्यात्, तत्राख्यातेन कर्मणोऽनभिधानादिति चेद् न। समभिव्याहृतचैत्रतण्डुलादिपदादेव कर्तृकर्मोपस्थितिसंभवेन तत्रापि शक्तिकल्पनायां गौरवात्। अनभिहिते कर्तरीत्यादेरनभिहितायां कर्त्रादिसंख्यायामित्यत्रैव तात्पर्यादिति दिक्।

इदं तु ध्येयम्—आख्यातवाच्यसंख्या प्रथमान्तपदोपस्थाप्य एवान्वेति। ततश्च चैत्रः पचति तण्डुलमित्यत्र चैत्रे तदन्वयः। चैत्रेण पच्यते तण्डुल इत्यादौ तण्डुले तदन्वयः। तथैव व्युत्पत्तेः। चैत्रेण (सूच्य? सुप्य)त इत्यत्र तु न कुत्रापि संख्यान्वयः, प्रथमान्तपदाभावात्। एकवचनं तु प्रयोगसाधुतामात्रम्। न चैवं केवलं पचतीति प्रयोगे संख्यान्वयः क्वापि न स्यादिति वाच्यम्। तत्र प्रथमान्तपदाध्याहारात्। आकाशेन स्थी(य)त इत्यत्र तु आख्यातार्थस्य यत्नादेरपि नान्वय इति तत्राख्यातस्य प्रयोगसाधुत्वमा(त्र?त्रार्थ)त्वमिति दिक्।

इदं त्ववधेयं—चैत्रस्तण्डुलान् पचतीति कर्तृलकार आश्रितफलं द्वितीयार्थः, तस्यानन्यलभ्यत्वात्। तस्य च तण्डुलेऽन्वयः। तदन्वितेन फलेनानुकूलव्यापाररूपस्य धात्वर्थस्य चान्वयः। तेन च धात्वर्थेनाख्यातार्थस्य जनकयत्नस्यान्वयः। तस्य च यत्नस्य चैत्रेऽन्वयः। ततश्च तण्डुलाश्रितफलानुकूलव्यापारजनकयत्नवांश्चैत्र इत्यन्वयधीरित्येके। वस्तुतस्तु फलानु-

कूलो व्यापार एव धात्वर्थः, नानुकूलव्यापारमात्रम् । आश्रितत्वं च संसर्गो न द्वितीयार्थः, अन्यलभ्यत्वात् । द्वितीया च साधुत्वमात्रार्था । आख्यातार्थश्च यत्न एव, न तु जनकयत्नः । जनक(त्व)स्य संसर्गत्वादित्यन्ये । चैत्रेण पच्यते तण्डुल इत्यत्र तु कर्मलकारे तृतीयाया आश्रितकृतिरर्थः । चैत्रान्वितया च तया कृत्या विषयतया फलानुकूलव्यापारस्वरूपस्य धात्वर्थस्यान्वयः । तेन चाख्यातार्थस्य फलस्यान्वयः । तेन च फलेन तण्डुलस्यान्वय इति चैत्राश्रितकृतिविषयफलानुकूलव्यापारजन्यविक्लित्तिरूपफलवांस्तण्डुल इत्यन्वयबोधो भवतीत्येके । वस्तुतस्तु आश्रि (तार्थ ? तत्वं) संसर्गः । कृतिश्चाख्यातलभ्या । ततश्च तृतीया साधुत्वमात्रार्था । विषयत्वं च संसर्गः । जन्यत्वमपि फलसम्बन्धवत् संसर्ग एव । फलं तु यद्यपि फलानुकूलव्यापारात्मकधात्वर्थविशेषणतया धातुनोपस्थितं, तथापि व्यापारजन्यफलवांस्तण्डुल इति तण्डुलस्य फलान्विततया प्रतीतिः फलस्याख्यातशक्यत्वं विनानुपपन्नेति फलस्याप्याख्यातशक्यत्वं तत्राङ्गीकार्यमिति दिक् ॥

इति कर्तृकर्मलकारविचारः ।

---

## अथ कृदन्तविचारः ।

एवं कर्तृकृतामपि कर्तरि शक्तिरेव । न च तत्राप्याख्यातवत् कृतावेव शक्तिः, संसर्गमर्यादया त्वाश्रय(त्व)भानमिति न कर्तरि शक्तिरिति वाच्यम् । तथा सति चैत्रो भोक्तेत्यादाव-

नुपपत्त्यभावेऽपि यत्र कृत्याश्रयवाचकपदानुपादानं, यथा भोक्ता समागत इति, तत्र कृतेर्धर्म्युपस्थापकपदाभावेन संसर्गतोऽप्याश्रयत्वभानासम्भवेऽनन्वयापातात् । न चैवं धात्वर्थस्य भोजनस्य कथं तदर्थैकदेशकृत्या सहान्वय इति वाच्यम् । चैत्रस्य नप्तेत्यादाविव साकाङ्क्षैकदेशेनाप्यन्वयाविरोधात् । आख्याते कर्तुर्न वाच्यता । आख्यातेन कृत्युपस्थितौ प्रथमान्तपदोपस्थितेन कर्त्रा संसर्गविधयाश्रयत्वभानोपपत्तेः । न चैवं चैत्रः पचतीति सुबन्ततिङन्तयोः कथं सामानाधिकरण्यम्, एकार्थवृत्तित्वाभावादिति वाच्यम् । एकार्थाधिकरणकसंख्याभिधायित्वमेव सामानाधिकरण्यमित्यभ्युपगमात् । अत एव 'चन्द्रे कलङ्क' इत्यादावपि न व्यभिचारः । तस्मान्नाख्यातवाच्यत्वम् । अन्यलभ्यत्वादेव कर्मणोऽपि नाख्यातवाच्यत्वं, किन्तु कर्मत्वमेव तद्वाच्य(त्व?)मित्याहुः ।

वस्तुतस्तु पचतीत्यादावध्याहृतदेवदत्तादिप्रथमान्तपदोपस्थाप्येनाख्यातार्थकृतेरिव भोक्ता समागत इत्यादावप्यध्याहृतपदार्थेन कृदन्ताभिहितकृतेरप्यन्वयसंभवात् कृदन्तपदानामपि कृतावेव शक्तिरित्याहुः ॥

इति कृदन्तविचारः ।

## अथ कर्मत्वलक्षणम्

तत्र कर्तृत्वं नाम कृतिरेव । कर्मत्वं च धात्वर्थतावच्छेदकपरसमवेतक्रिया (जन्यफलवत्त्वम्) । फलवत्त्वं च फलमेवात्र ।

वृक्षात् पर्णं पततीत्यत्र पर्णसमवेतपतनजन्यविभागरूपफलशालित्वाद् वृक्षस्य कर्मता स्यात् । अत उक्तं धात्वर्थतावच्छेदकेति फलविशेषणम् । तत्र न विभागः पततिधात्वर्थतावच्छेदकः । किन्त्वधःसंयोग एवेति न वृक्षेऽतिव्याप्तिः । तथापि पर्णस्य कर्मता स्यात् । अत उक्तं परसमवेतेति क्रियाविशेषणम् । न चैवमपि तादृशसंयोगरूपफलशालित्वाद् भूतलस्य कर्मत्वं स्यादिति वाच्यम् । यद्वाचकपदसमभिव्याहारं विनापि धात्वर्थतावच्छेदकफलप्रतीतिः, न तस्य कर्मत्वम् । अतो भूतलपदसमभिव्याहाराभावेऽप्यधस्संयोगरूपफलप्रतीतेर्न भूतलस्य कर्मत्वम । एवमन्यस्य कस्यापि (न) तत्र कर्मत्वम् । ग्रामं गच्छतीत्यादौ तु ग्रामादिपदसमभिव्याहारं विना ग्रामादिसंयोगरूपफलाप्रतीतेर्ग्रामादेः कर्मत्वम् । आत्मानं जानामीत्यत्र तु धात्वर्थरूपक्रियायाः परसमवेतत्वाभावाज्ज्ञाततताया निरस्तत्वेन तादृशक्रियाजन्यफलाभावाच्च नात्मनः कर्मत्वं, किन्तु तत्र द्वितीयया विषयत्वमेव लक्ष्यते । एवं घटं जानामीत्यादावपीति ध्येयम् । न चैवं विशेषानुशासनाभावे सुब्विभक्तेरन्यत्र न लक्षणेति गतमिति वाच्यम् । विशेषानुशासनं विना सुब्विभक्तेर्विभक्त्यन्तरार्थे लक्षणाविरहेऽपि विषयत्वे लक्षणायां बाधका(नु?)भावात् । अत एव तिङ्विभक्तेरपि विशेषानुशासनबलाद् विभक्त्यन्तरार्थे लक्षणाविरहेऽपि रथो गच्छतीत्यादौ व्यापारे लक्षणेति दिक् ।

मण्डनमिश्रास्तु — धात्वर्थः फलं न तदनुकूलो व्यापारः,

तस्याख्यातार्थत्वात्। न चैवं फलानुत्पत्तिदशायां फलानुकूलव्यापारकाले पाको वर्तत इति प्रयोगो न स्यादिति वाच्यम्। तत्र पाकपदस्य लाक्षणिकत्वाद्, लाघवेन धातोः फल एव शक्तिग्रहात्। नन्वेवमोदनकामः पचेदित्यत्र धात्वर्थे प्रवृत्त्यर्थं तस्यौदनसाधनत्वं (अतयिति? कृति)साध्यत्वं च विधिना बोधनीयम्। फलस्य च धात्वर्थत्वे तन्न संभवति। ओदनस्यौदनसाधनत्वासम्भवात्, फलस्योपायगोचरकृतित एव सिद्धेः साक्षात्कृतिसाध्यत्वासम्भवाच्च। तस्मात् फलानुकूलव्यापार एव धात्वर्थः, न फलम्। आख्यातार्थश्च तादृशव्यापारानुकूलो यत्न एव न तादृशव्यापार एवेति चेद्, न। अस्मन्मते न धात्वर्थे विध्यर्थान्वयः। किन्त्वाख्यातार्थे तदनुकूलव्यापार एव, एकप्रत्ययोपात्तत्वप्रत्यासत्तेः। ततः पचेदित्यादौ नानुपपत्तिः। न चैवमपि लाघवादाख्यातस्य फलरूपधात्वर्थानुकूलयत्न एवार्थः किं न स्यादिति वाच्यम्। तथा सति विध्यर्थीभूतस्य कृतिसाध्यत्वस्यानन्वयापत्तेः। कृतौ कृतिसाध्यत्वायोगात्। तस्माद् धात्वर्थः फलम्। आख्यातार्थस्तु तदनुकूलो व्यापारः। एवञ्च रथो गच्छतीत्यादावपि न लक्षणेत्याहुः। तन्न। एवं सत्योदनं पचतीति न स्यात्। ओदनफलस्यैव धात्वर्थत्वेन तत्र पच्यर्थानन्वयप्रसङ्गात्। तस्मात् फलानुकूलो व्यापार एव धात्वर्थः। तदनुकूलयत्नश्चाख्यातार्थः। विध्यर्थेष्टसाधनत्वाद्यन्वयश्च धात्वर्थ एवेति दिक्।

इति कर्मत्वलक्षणम्।

## अथोपसर्गवादः ।

नन्वेवं धातोः फलानुकूलव्यापारे शक्तिरस्तु । तथापि विहरत्याहरति संहरति प्रहरतीत्याद्युपसर्गभेदेनार्थविशेषप्रतीते-रुपसर्गाणामेव तत्तदर्थे शक्तिर्न तु धातोरेव, अनेकशक्ति-कल्पनायां गौरवात् । न चैवं धातुविनाकृतादुपसर्गादपि त-त्तदर्थधीप्रसङ्ग इति वाच्यम् । तात्पर्यग्रहणार्थं धात्वपेक्षणात् । न च प्रजयतीत्यत्र प्रकृष्टजयः प्रतीयते । प्रतिष्ठत इत्यत्र ग-मनं प्रहरतीत्यत्र ताडनमित्युपसर्गस्यानेकशक्तिकल्पनं तुल्य-मिति वाच्यम् । तथाप्यनन्तानां धातूनामनेकार्थत्वकल्पनाद् वरं कतिपयोपसर्गाणां तत्कल्पनामिति चेद् , न । प्रतिष्ठत इ-त्यत्र धातोस्तात्पर्यग्रहार्थत्वे यत्नस्याख्यातार्थस्य प्रशब्दार्थे गम-नेऽन्वयो न स्यात् , तस्य प्रकृत्यर्थादन्यत्रान्वयादर्शनात् । त-स्माद् धातोरेव तत्र शक्तिरित्य(न्य)त्रापि तथा । प्रादयस्तु ता-त्पर्यग्राहकाः । न च तत्र धातोर्गमनविरोधिव्यापार एवार्थः । तत्र चाख्यातार्थस्य यत्नस्यान्वयः । प्रशब्दस्य च तदभावोऽर्थ इति नाख्यातार्थस्य प्रकृत्यर्थान्वयानुपपत्तिरिति वाच्यम् । एवं सति प्रतिष्ठत इत्यत्र गमनविरोधिव्यापारविषयकयत्नाभाववा-नित्येव प्रतीतिः स्याद् , न तु गच्छतीत्यत्रेव गमनत्वप्रकार-कधीः । न चेष्टापत्तिः , अनुभवविरोधादिति दिक् ।

केचित्तु—प्रतिष्ठत इत्यत्र धातुना विरोधिलक्षणया गम-नोपस्थितिः । प्रशब्दस्तु तात्पर्यग्राहक इत्याहुः । तन्न । एवं सति घटो नेत्यादावपि घटशब्द एवाभावे लाक्षणिकः, नञस्तु ता-

त्पर्यग्राहकत्वमित्यपि (किं) न स्यात्। तस्मान्नानन्तोपसर्गाणामपि शक्तिरङ्गीकार्येति दिक् ॥

इत्युपसर्गवादः।

अथोपसंहारप्रकरणम्।

एवं चत्वार्यपि प्रमाणानि निरूपितानि। चेष्टादीनि चैषामन्तर्भवन्तीति तानि न पृथक् प्रमाणानि। तथाहि — यद्यपि शब्दवदर्थविशेषे सङ्केतग्रहे सति चेष्टयाप्यर्थप्रतीतेः सापि प्रमाणान्तरं भवितुं युक्त, शब्दवदमुं प्रत्येमीत्यनुव्यवसायस्याप्यविशेषात्। तथापि चेष्टया स्मृतादेव शब्दादर्थप्रतीत्युपपत्तेर्न प्रमाणान्तरकल्पनं युक्तं, गौरवात्। न च मूकस्य न चेष्टया शब्दस्मृतिसम्भव इति वाच्यम्। अङ्कुशाभिघातविशेषेण व्याप्तिग्रहे सति हस्तिपकाभिप्रायमनुमाय गजस्येव मूकस्यापि चेष्टाविशेषेण प्रवर्तकाद्यभिप्रायमनुमाय प्रवृत्त्याद्युपपत्तेः। यथा चैवं शिष्टस्याप्यनुमानविधया प्रामाण्यं, तथोक्तं प्राक्। तस्माच्चेष्टा न प्रमाणान्तरमिति दिक्।

एवं सहस्रे शतं सम्भवतीति सम्भवस्यानुमान एवान्तर्भाव इति। इह वटे यक्षस्तिष्ठतीत्यैतिह्यस्य तु शब्देऽन्तर्भावः। अर्थापत्तेस्तु व्यतिरेक्यनुमान एवान्तर्भाव इत्युक्तम्। अनुपलब्धेस्तु प्रत्यक्षसहकारित्वमात्रं, न प्रमाणान्तरत्वमित्युक्तं प्रत्य-

क्षपरिच्छेदे । तस्माद् युक्तं चत्वार्येव प्रमाणानीत्यनवद्यम् ॥

इत्युपसंहारप्रकरणम्

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कविश्वजिदतिरात्रयाजिसर्वतन्त्रस्व-
तन्त्राद्वैतविद्याचार्यविश्वामित्रवंशमुक्ताफलसत्यमङ्गलरत्नखेट-
श्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसम्भवस्य
श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजता-
लब्धविद्यावैशद्यस्य विश्वजिद्याजिनः
श्रीराजचूडामणिदीक्षितस्य
मणिदर्पणे
शब्दपरिच्छेदः ।

शुभं भूयात् ।

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | २ | (तत्र ?) | तत्र |
| ४६ | १० | नानन्त | नान्त |
| ९१ | ७ | स्व | सुब् |
| ९६ | ३ | वाने | वा नै |
| १०२ | १४ | वच्यम् | वाच्यम् |
| ११० | ४ | जमाह | जामह |
| ,, | ७ | दोषक | दोष |

# Ready for sale.

भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. 1 0 0

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदय: (Kâvya) by Vâmana Bhaṭṭa Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णव: (Kâvya) by Nîlakaṇṭha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेक: (Alankâra) by Mahima Bhaṭṭa with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्ति: (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇṭha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtakå) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |
| No. 14 — नीतिसार: (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16 — प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |

No. 17—पञ्चरात्रम् (Do.) Do. 1 0 0

No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. 4 0 0

No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. 1 4 0

No. 20—अविमारकम् (Nâṭaka) by Bhâsa. 1 8 0

No. 21—बालचरितम् (Do.) Do. 1 0 0

No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâṭaka) by Bhâsa 1 8 0

No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) 1 12 0

No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. 1 0 0

No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri 0 12 0

No. 26—अभिषेकनाटकम् (Nâṭaka) by Bhâsa 0 12 0

No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivaraṇa of Nârayaṇa Paṇḍita (1 & 2 Sargas) 1 12 0

No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas 0 8 0

No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (3rd Kanda) 2 4 0

No. 30—वास्तुविद्या (Silpa) 0 12 0

No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (4th, 5th, & 6th Kandas) 1 0 0

No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha, and Vivarana of Nârâyana Pandita (3rd, 4th & 5th Sargas) 2 8 0

No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana 0 8 0

No. 34.—मणिदर्पणः (शब्दपरिच्छेदः) (Nyaya) by Râjachûdâmanimakhi 1 4 0

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

